स्थावरा वा, किं चान्यत्—इहैव तावद्दासो भूत्वा राजा भवति राजा भूत्वा द्रमकः, तथा बालकौमारयौवनमध्यमस्थाविर्याण्यन्योपमर्देन प्राप्नोति, गतिस्थाननयनासनस्वप्नबोधादयोऽन्येऽपि विशेषा वक्तव्या इति, किंचान्यत्–प्रत्यक्षेण परोक्षं साध्यते, तच्चामी सत्त्वा 'उरालं जगतो जोगं' सिलोगो ॥ ८४ ॥ ओरालं प्रागडं स्थूलं जगतो योगो, तद्यथा—गर्भबालकौमारयौवनमध्यमस्थाविर्याण्योरालाणि प्रागडानि जुज्जंति विजुज्जंति, तथा च तस्मिन्नेव वयसि कश्चिद्दासो भूत्वा राजा भवति, ईश्वरश्च भूत्वा निर्द्धनो भवति, 'अस भुवि' विपरीततामेवैति विपर्यासः, विपर्यासेन प्रलीयन्ते, अन्यथाभावगमणेनेत्यर्थः, चशब्दान्न सर्वथा प्रलीयंते, द्रव्यतो हि अवस्थिता एव, अनेन प्रत्यक्षदृष्टेन सामान्येनानुमानेनैव साध्यन्ते, यथेह जातिसरणाद्वा बहवो विशेषा दृश्यन्ते एवं भवान्तरगतस्य अप्रत्यक्षाः, गतिकायेन्द्रियलिंगत्रसस्थावरराजयुवराजईश्वरादिदासभृतकद्रमकादयश्चोत्तमाद्याः विपर्यासाः, भवान्तरेष्वपि प्रत्येतव्याः, एते तु प्रत्यक्षपरोक्षाः ताँस्तान् पर्यायविशेषान् परिणमंतः 'सव्वे अक्कंतदुक्खा य' सव्वें इत्यपरिशेषाः कान्तः प्रिय इत्यर्थः न कान्तमकान्तं दुक्खं अनिट्ठं अकामं अप्पियं जाव अमणामं दुक्खं, अनुकूलमपि चैतत् ज्ञायते, तथा सव्वे इट्ठा सुभा कंता सुभा जाव मणामा सुभा 'अत' इति अस्मात्कारणात् अहिंसगाः, एवं ज्ञात्वा सर्वसत्त्वान्यस्य साधोरहिंसनीयानि, किं कारणं ?, तदुच्यते–'एवं खु णाणिणो सारं' सिलोगो ॥ ८५ ॥ 'एतदि'ति यदुक्तमुच्यते वा सारं विद्धीति वाक्यशेषः, यत्किं ?, उच्यते, जे ण हिंसति किंचणं, किंचिदिति त्रसं स्थावरं वा, अहिंसा हि ज्ञानगतस्य फलं, तथा चाह–'योऽधीत्य शास्त्रमखिलं०' एवं खु णाणिणो सारं जं ण भासे अलियपयं, एवं अदत्तं, मेहुणं, परिग्गहं च, जं च रागादि अज्झत्थदोसे विवज्जेति तदप्युच्यते एवं खु णाणिणो सारं, स्यात्किं कारणं सत्त्वा न हिंसनीया ?, उच्यते–'अहिंसा समयं चेव' अहिंसासमयो नाम

तुल्यता, यथा मम दुक्खमप्रियं एवं सव्वसत्त्वानां, एतां अहिंसां समतामात्मनः सर्वजीवैः एतावन्तं वियाणिया न हिंसति कंचनमिति वर्त्तते, एतावांश्च ज्ञानविषयः यदुन सर्वत्र समया भाव्येति, तथा मृषाऽदत्तादानादिष्वपि आश्रवेषु यथासंभवमायोज्यमिति, उक्ता मूलगुणाः, उत्तरगुणसिद्धये व्यपदिश्यते 'वुसिए य विगतगेही आयाणं'सिलोगो ॥८६॥'वुसिते'त्ति स्थितः, कस्मिन् ?, धर्म्मे, विगता गृद्धिरिति अलुद्धः, 'आदिरंत्येन सहिति'त्ति अक्रुद्धः अमानः अमायावी, पठ्यते अकसायी, सदाधिगतबोधी, कषायाः क्रोधाद्याः, गृद्धिर्लोभः, एगग्गहणे गहणमिति 'आदिरन्त्येन सहितेति' वा गृद्धिग्रहणात्सर्वे आकृष्टाः,'आदाणं सारक्खए'त्ति आत्मानं सारक्खति असंजमाओ, आदीयत इत्यादानं–ज्ञानादि, तं सारक्खति मोक्खहेतुं, किं ?–'चरियासणसेज्जासु भत्तपाणे य अन्तसो' सारक्खति इति वर्त्तते, चरियत्ति इरियासमिति गहिता, चरियाए पडिवक्खो आसणसयणे, एत्थ आदाणं सारक्खति, अथवा चरियागहणेण समिईओ गहिताओ, आमणसयणगहणेण कायगुत्ती, एक्कग्गहणेणं गहणंतिकाऊण मणवइगुत्तीओवि गहिताओ, भत्तपाणग्गहणेण एसणासमिई, एवं आदाणपरिट्ठावणीयाई सूइयाओ, 'अन्तस' इति जाव जीवितान्तः। 'एतेहिं तिहिं ठाणेहिं' सिलोगो ॥ ८७ ॥ 'एतानी'ति यान्युक्तानि इरिया एगं ठाणं आसणसयणंति बिइयं भत्तपाणेति तईयं, अहवा एतेसु चेव इरियाइगेसु मणोवयणकाएणं, अहवा इरियं मोत्तूण सेसेसु उग्गमउप्पायणेसणासु संजमेज्ज सया मुणी, सदा–सर्वकालं। इयाणिं एतेसु संजमंतो इमानन्यानध्यात्मदोपान् परिहरेत्, तद्यथा–'उक्कोसं जलणं णूमं' सिलोगो ॥ ८८ ॥ उक्कस्सतेऽनेनेति उक्कोसो–मानः, ज्वलत्यनेनेति ज्वलनः–क्रोधः, नूमं णाम अप्रकाशं माया, अज्झत्थो णाम अभिप्रेतः, स च लोभः, स एवं परसमयाः, न सद्भाव इति मत्वा सम्यग्दृष्टिज्ञानवान् यथोक्तेषु मूलोत्तरगुणेषु यतमानः 'समिते तु सदा साधू' सिलोगो

॥ ८८ ॥ समिते तु तेषामेवोत्तरगुणानां पूर्वोक्तानां परिसमाननं क्रियते सदा—नित्यं, तुर्विशेषणे, साधयतीति साधुः, पंचासंवराः प्राणातिपाताद्याः तत्संवृतत्वान्न पापमादत्ते इति, स एवं संवृतत्वात् सितेहिं असिते भिक्खू, सिता बद्धा इत्यर्थः, गृहिकुपाषंडादिभिर्गृहकलत्रमित्रादिभिः संगैः सिताः तेषु सितेष्वसितः, अबद्ध इत्यर्थः, तैर्याच्यमानः तानाश्रितो वा अणसितः, एवं कथं?, उक्तं हि 'जणमज्झेवि वसंतो एगंतो०' आङ् मर्यादाभिविध्योः परि समंतात् आदिमध्यावसानेषु यावन्न मुच्यसे ताव आमोक्खाए परिवएज्ञासित्ति बेमि शिष्योपदेशो। गतः सूत्राणुगमो, इदाणिं णया—'णायम्मि गिण्हिअव्वे०'गाथा ॥ ॥ 'सव्वेसिंपि णयाणं०' गाथा ॥ ॥ इति श्री सूत्रकृतांगे समयाख्यं प्रथमाध्ययनं समाप्तं ॥

अज्झयणाभिसंबंधो ससमयगुणे णाऊण परसमयदोसे य ससमए जयमाणो कम्मं विदालेज्ञासित्ति वेयालियज्झयणमागतं, तस्सुवक्कमादि चत्तारि अणुयोगद्दारा, अज्झयणत्थाधिकारो कम्मं वियालियव्वंति, उद्देसत्थाधिकारो पुण "पढमे संबोधि अणिचया य" गाहा ॥ ४० ॥ पढमे उद्देसए हिताहिता संबुज्झितव्वं अणिचता य 'डहरे बुड्ढे य पासधा' एवमादि, बितिए उद्देसए 'माणवज्जणता' माणो वज्जेयव्वो, 'जे यावि अणायए सिदा' एवमादि, "उद्देसम्मि ततिए" गाहा॥४१॥ततिए मिच्छत्तादिचितस्स कम्मस्स अवचयो 'संवुडकम्मस्स भिक्खुणो' एवमादि, णामणिप्फण्णे णिक्खेवे वेयालियंति तत्थ गाथा॥ वेयालियंमि वेयालगो य वेयालयं वियालणियं। तिण्णिवि चउक्कगाइं वियालगो एत्थ पुण जीवो ॥३६॥ तत्थ वेतालिगो णामादि चतुर्विधो, णामठवणाओ तहेव, दव्ववेयालगो जो हि जं दव्वं वेयालियंति रथकारादिः, भावे णोआगमतो भाववियालगो साधुः, जीवो कम्मं विदालयति कम्मं वा जीवं, विदालणंपि णामादि चतुर्विधं, तत्थ गाथा "दव्वं च परसुमादी" गाथा ॥३७॥ विदा-

लणमिति करणभूतं, तत्र द्रव्ये परश्वादि, ज्ञानाद्यात्मकेन भावेन भाव एव मिथ्यात्वादिरूपो विदार्यते, भावे विदारणं णाणदंसणचरित्ताणि, विदालणियंपि नामादि चतुर्विधं, णामठवणाओ तहेव, दव्वविदालणियं दारुगं, भावे अट्ठविहं कम्मं विदारिज्जति, वेयालियस्स गाथाए णिरुत्तं भणति-"वेयालियं इहं देसियंति वेयालियं नतो होति।"एतदेव करणभूतं वेयालियकमध्ययनं, किं विदारयति ?,तदेव कर्म्म,आह-यद्येवं सर्वाणि कर्म्मविदालणानि,विशेषो वा वक्तव्यः,उच्यते,अयं विशेषो-"वेयालियं इहं वित्तमत्थि तेणेव य णिवद्धं"॥३८॥ वेतालियं नाम वृत्तजाति तया वा बद्धत्वात् वैतालियं। अस्योपोद्घातः"कामं तु सासतमिणं कथितं अट्ठावयम्मि उसभेण। अट्ठाणउतिसुताणं सोऊण य तेऽवि पव्वइया ॥ ३९ ॥" भरहेण भरहवासं णिज्जिऊण अट्ठाणऊतीवि भायरो भणिता-एवं ओलग्गध रज्जाणि वा मुयधत्ति, अट्ठावए भगवन् उसभसामी पुच्छितो, एवं भरहो भणति, किमेत्थ अम्हेहिं करणीयंति ?, ततो भगवता तेसिं अंगारदाहगदिट्ठंतं भणिऊण इदमध्ययनं कथितं, यद्यपि चेदमध्ययनं शास्वतं तथापि तेन भगवता पुत्राः संबोधिताः इतिकृत्वा स एव विशेषस्तीर्थकरैरप्यस्य उपोदघातेऽनुवर्त्तते स्म इति। एवं उवग्घातणिज्जुत्तीए 'उद्देसे निद्देसे य णिग्गमे'त्ति अक्खाणगं समोतारेयव्वं, स भगवान् तान् तत्संसारविमुमुक्षुराह-भो! 'संबुज्झह किण्ण बुज्झह' वुत्तं, (८९) सम्यक् संगतं समस्तं वा बुध्यत संबुज्झह, स्यात् कहिं बुध्यते ?, धर्म्मे, किमिति परिप्रश्ने, स्यात्किं कारणं बुध्यते?, संबोधी खलु पेच्च दुल्लभा, संबोधिस्त्रिविधा-णाणदंसणचरित्ताणि, खलु विशेषणे, चारित्रसंबोधिरधिक्रियते मनुष्यत्वे, न शेषगतिष्वितित, अथवा बुज्झह, किं रज्जेहिं विसएहिं कलत्तेहिं वा करेस्सह ?, प्रसुप्तस्य संबोधिर्भवतीत्यतः सुत्ता एव वक्तव्याः, एत्थ णिज्जुत्तीगाथा-दव्वे णिद्दावेए दरिसणणाणतवसंजमा भावो। अधिकारो पुण भणितो णाणे तह दंसणचरित्ते॥४२॥सुत्तो दुविहो-दव्वसुत्तो

भावसुत्तो य, तत्थ दव्वसुत्तो दुविहो–उवचारसुत्तो णिद्दासुत्तो य, उपचारसुप्तः पतित ओदकः, निद्रासुत्तो नाम निद्रावेदोदयाविष्टः स्वपिती, पञ्चानामपि विषयाणां तत्कालमात्रज्ञो, भावसुप्तस्तु ज्ञानादिविरहितः अज्ञानी मिथ्यादृष्टिरचारित्री च, जो दव्वसुत्तो सो भावओऽवि भतिओ, एवं जागरिओवि, द्रव्यजागरिता भावसुप्तेन चाधिकारः। स्यात् कथं संबोधि दुल्लभा ?, उच्यते, 'माणुस्स देसकुलकाला' गाथा ॥ इतश्च संबोद्धव्यं धर्म्मे यस्मात् 'णो हूवणमंति रातिओ णो सुलभं पुणरावि जीवियं,' नह्यतिक्रान्तरात्रयः पुनरुपनमंते, कथं ?, न हि बालरात्रयो यौवनरात्रयो वाऽतिक्रम्य पुनरुपनमंते, का तर्हि भावना ?, न वृद्धो भूत्वा पुनरुत्तानशायी क्षीराहारो बालको भवति, नवा शिल्पककलाग्रहणसमर्थः कुमारको रक्तगंडमंसु भवति, नवाभिनवश्मश्रुभूषिताधरोष्ठकपोलः कामभोगोल्वणमना युवा भवति, अत्रोदाहरणं लौकिकं, नन्दः किल मृत्युदूतैराकृष्ट आह–कोटीमहं दद्यां यद्येकाहं जीवेत्, तथापि न लब्धवान्, इत्यतः णो सुलभं पुणरावि जीवितं, जहण्णेणं अंतोमुहुत्ताऊहि उक्कोसेणं पुव्वकोडीआयुगेहि अहियारे ऊहिए एत्थंतरे कस्सइ उपक्कमो होज्ज, तं पुण जिण्णं ण सक्कति पुणो वड्ढावेतुं, सदोपक्रमोऽनियतो, तद्यथा "डहरा वुड्ढा य पासधा गब्भत्था य चयंती माणवा" (९०) मनोरपत्यानि मानवाः, मानवग्रहणेन मनुष्याणां कथ्यते, अथवा सर्व एव मानवाः अपदिश्यंते, 'सेणे जह वट्टयं हरे' 'यथे'ति येन प्रकारेण, वट्टगा नाम तित्तिरजातित ईषदधिकप्रमाणा उक्ता वार्तकाः, एवमवधारणायां, आयुषः क्षयः आयुःक्षयः, स तु उपक्रमादन्यथा वा 'तुट्टइ'त्ति त्रुट्यते जीवः शरीरात् वा शरीरं जीवात् अथ मनुष्यजीवितात्तुट्यति स्वजनादिभिर्वा, योऽपि नाम कश्चित्स्वजनप्रमत्तो न बुध्यते यथा मातापितरौ मे वृद्धौ, ताभ्यां मृताभ्यां धर्म्मं करिष्यामीति, एतदप्यकारणं, कथं ?, तर्हि उच्यते–'माताहि पियाहि लुप्प' वृत्तं (९१) मातृभ्य इति सर्वमातृग्रामो

गृह्यते, पितृभ्य इति पितृग्रामः, लुप्यत इति छिद्यते तेपु जीवात्, स्वयं कदाचित् पूर्व्वतरं म्रियते, न च सैव माताऽन्यत्रापि भवति पिता वा, अथैकेन्द्रियादिपु प्रक्षिप्तः नैव मातापितृसंबंधं लभते, न वा सुगतिः प्रेत्य सुलभा भवति, सुगतिर्नाम सुकुलं, प्रेत्य योनि-स्थितिरेव, नागार्ज्जुनीयास्तु पढंति 'माता पितरो य भायरो विलमेज्जसु केण पच्चए' नारकदेवैकेन्द्रियासंज्ञिपु च, यतश्चैवं तेण एताणि भयाणि वेहिया एतानि यान्युक्तानि—णो हूवणमंति राइओ, पेक्खिया—देहिया पस्सिया, आरंभो नाम असंयमः अनुक्तमपि ज्ञायते, परिग्रहाच्च, कथं ?, आरंभपूर्वको परीग्रहः, स च निरारंभस्य न भवती ततः आरंभग्रहणं, स्यादारंभादनिवृत्तस्य को दोपः ?, उच्यते, 'जमिणं जगति पुढो जगा' वृत्तं ॥ ९२ ॥ 'यदि'ति यस्मात्कारणात् अस्मिन् जगति, पुढो नाम पृथक्, कम्मेहिंति यथाकर्म्मभिः लुप्यंति नरकादिपु विविधैर्दुःखैर्लुप्यते, सर्वसुखस्थानेभ्यश्च्यवंते, किंच—'सयमेव कडे भि(व)गाहतु' ण इस्सरादिकतं एव, येन यथा कर्म्म कृतं असंवेदोपात् अष्टप्रकारं आत्मनि अवगाहति, आत्मा कर्म्मसु वा, अकारलोपं कृत्वा तमेव अवगाहति 'णो तेण मुच्चेज्ज अपुट्ठवं' नासौ तेण—कर्म्मणा मुच्यतेऽस्पृष्टमस्यास्तीति, आह हि 'पावाणं च भो ! कडाणं कम्माणं' किंच-न केवलमिहानित्यता भवति, अन्यत्रापि एषा भवत्येव, तथा 'देवा गंधवरक्खसा असुरा' वृत्तं (९३) अथवा मा भूत्कश्चिद्देव-सुखेपु संगं करिष्यतीत्यतस्तदनित्यताज्ञापनार्थं अपदिश्यते 'देवा गंधव्वरक्खसा' देवग्गहणात् वाणमंतरभेदो, असुराणां प्रतिपक्षः, सुरा वैमानिकाः, भूमिगता असुरा एव, अथवा भूमिगता भूमिजीवा एव, अथवा भूमिगताः सरिसृपा गृह्यन्ते, इहापि च 'राया णर सेट्ठि माहणा' राजानः-चक्रवर्त्याद्याः नरा-पृथग्जनाः सेट्ठिणो-णेगमाद्या, अधिपास्तु अधिकं पांतीत्यधिपाः, ते तु मंत्रिमहामंत्रिगणक-दौवारिकादयः, माहनग्रहणात् जातिभेदः, त एते सर्व्वे एव स्वस्थानेभ्यश्च्यवंते, दुःखिता नाम, नवा स्यात्कस्यचिन्मरणमिष्टं, उक्तं

च 'मरणमिति महद्भयं'तदपि च कालवशेन किं ?, येऽपि कामनिमित्तेनोद्यमंते तान् प्रत्युपदेशः,'कामेहि य संथवेहि य'वृत्तं(९४) एत्थ इच्छाकामा अप्पसत्थिच्छाकामा मयणकामा य,अविशिष्टा वा शब्दादयः,कामोपग्रहाश्च स्त्र्यादयः संस्तुता वर्त्तन्ते,अथवा संस्तुता इति पूर्वापरसंस्तवो गृह्यते, स एवं तेभ्यः कामेभ्यः संस्तवेभ्यश्च 'कम्मसहि'त्ति कर्म्मभिः सह तुट्यतीति, कोऽर्थः ?, न ते कामाः संस्तुताश्चैनं गच्छंतमनुयास्यंति, 'कालेने'ति सोपक्रमेणान्यतरेण वा, जायंत इति जन्तवः, 'ताले जह बंधणच्चुतो' ताले जातं तालं, तालं हि गुरुत्वाद् दूरपाताच्च शीघ्रं पततीत्यतस्तद्ग्रहणं, तालस्यापि द्विधा पातः—उपक्रमात् कालेन च, एवं आउक्खएवि तुट्टति जीवोऽपि सोपक्रमेणान्यथा वा, किंच—न केवलं कामेषु संस्तुतेषु च सत्त्वा गृहिणस्तावत् पढंति, अन्येऽपि हि तथैव, तंजहा— 'जे यावि भवे बहुस्सुता धम्मिय माहण भिक्खुए' ॥८५॥ बहुस्सुया धर्म्मे नियुक्तो धार्मिकः, बृहन्मना ब्राह्मणः, भिक्खणसीलो भिक्खू, सुचिरिति यथावस्त्वधर्म्मव्यवस्थितः, परिव्राजको वा,'अभिनूमकरेहि मुच्छिया' नूमं नाम कर्म माया वा, अभिमुखं नूमीकुर्वन्तीति अभिनूमकरा—विषयास्तेषु मूर्च्छिता—गृद्धा, लोभो गृहीतः, एगग्गहणे गहणंति सेसकसायावि गहिता, कथं तं नेच्छंति ?, पत्थंति पत्थिज्जंति च अण्णेहिं तेहिं आहारादिसु कामेसु सत्ताः, इह च परत्र च तीव्रमेव तदुपचितैः कर्म्मभिः कृत्यन्ते कामजनितैरित्यर्थः, स्यात्—कथं ते कर्म्मभिरेव कृत्यन्ते न निर्वान्ति ?, उच्यते, 'अथ पास विवेगमुट्ठिते' वृत्तं ॥ ९६ ॥ 'अथे'ति प्रकृतिअपेक्षं, अथवा कर्म्मविवागो यत्र, किं न पश्यसि विवेगमुट्ठिते ?, विवेगो नाम स्वजनगृहादिभ्यः प्रव्रज्यास्थानमन्यतरं, अथवा कर्म्मविवागो यत्र स्थिताः कर्म्मनिर्ज्जरणायेत्यर्थः, विविधं तीर्णा वितीर्णा न वितीर्णा अवितीर्णा न कामभोगाभावतीर्णा, 'इह' अस्मिँल्लोके, अथवा इहेति पूरणार्थः, धुतं णाम येण कर्म्माणि विधूयन्ते, वैराग्य इत्यर्थः, चारित्रमपि, केचिद्भणंति—

वयं स्वतः विरता, विरताः अपापकर्म्माणः, अथवा अपि संभावने, तीर्गा अपि गृहादिसंग्रंथं केवलं भाषंते, न तु कुर्वन्ति, स एवं भाषमाणः पाखंडी पाखंडगणो वा, अणेगेसु च एकादेशो भवत्येव 'णाहिसि आरं कतो परं' ज्ञास्यति आरं—गृहस्थत्वं परं—प्रव्रज्या, किमुक्तं भवति—न त्वं जानीषे, कैः—किम्मभिः गृही भवति प्रव्रजितो वा, अजानन् कथं कुशलानि वेत्स्यसि ?, अथवा आरमित्ययं लोकः परस्तु परलोकः, अयं सौत्रोऽर्थः—आरः—संसारः परो—मोक्षः, तदिति आरं पारं वा न ज्ञास्यति, कुतः?—कुमार्गाश्रयात्, अथवा 'ण णाहिसि' त्ति न जानिष्यसि मोक्षमात्मानं परं वा, तत्रात्मा आरं परं पर एव, अथवा णाहिसि गिही ण पव्वइओ, आरो पव्वइओ, आरो गृही परः प्रव्रजितः, वेहासं नाम अंतरालं, न गृहित्वे नापि श्रामण्ये, अंतराले वर्त्तते, ते हि आहारादिषु सक्ता इह परत्र च तीव्रमेव तदुपचितैः कर्म्मभिः कृत्यन्ते, कामजनितैरित्यर्थः, आह—एते तावदवितीर्णत्वात् मा भवन्निर्वाणाय, अथ ये इमे उद्दंडिकाः चूर्णिकादयश्च एते कथ न तन्निर्वाणाय ?, उच्यते, "जइवि णिगिणे किसे चरे" वृत्तं ॥९७॥ यदित्यभ्युपगमे णिगिणो नाम नग्नः, कृशस्तपोभिर्निष्टप्तत्वाद् आतापनादिभिः, मासो संख्यातप्रतिभाग इतिकृत्वा मासस्य अंते सकृद्भुंक्त इति मासान्तशः 'चउत्थछट्ठट्ठमदसमदुवालसमेहिं' स एवं निष्टप्तशरीरोवि 'जे इह मायादि मिज्जति' अणिद्दिट्ठणिद्देसा माया आदिर्येषां कपायाणां, आदीयत इत्यादिः, माङ् माने, कथं ?, मीयते, पूर्यत इत्यर्थः, मायादीनां कपायाणां योजनं, अथवा मीयत इति—यथा धान्यस्य कुडो मीयते एवं मायादिभिः कपायैः स मीयते, पूर्यत इत्यर्थः, स एवं कपायाणामाकंठं मितः मरणमितो 'आगंता गब्भादणंतसो' आगमिष्यतीति आगंता, गर्भः आदिर्यस्य संसारक्रमस्य भवति स गर्भादिः, तद्यथा—गर्भप्रसवबाल्यकौमारयौवनमध्यमस्थाविर्यमरणनरकदुःखान्त इति, उत्तीर्णस्य च नरकात् स एव ध्रुवः, पुनः स एव क्रम इति,

यतश्चैवं मिथ्यादर्शनोपहतं तपोपि न दुर्गतिनिवारकमित्यतो मद्दर्शितमार्गमास्थाय "पुरुसोरम पावकम्मुणा" वृत्तं ॥ ९८ ॥ पुरि शयनात् पुरुषः, हे पुरुष! पुरुषा वा उपेत्य उवरम–उपरम पावानि–प्राणातिपातादीनि मिच्छादंसणसल्लंताणि अट्ठारस ठाणाणि, स्यात् कामभोगजीवितनिमित्तं नोपरमसि इत्यतोऽपदिश्यते 'पलियंतं मणुयाण जीवितं' परि–समंतात् आदियति जीवितस्य परं वर्षशतं, अथवा प्रलीयं–कर्म्म यावदायुर्निर्वर्त्ति तत्परिक्षयान्तं, अथवा यस्यान्तोऽस्ति तत्प्राप्तमेव वेदितव्यमिति, आह हि दूरस्थमपि भावित्वात् आगतमेव, तथा उदधीन्यपि दिव्युषितो, जे पुण असंजमजीवितेण कलत्रादीपंकावसन्ना 'इह' मनुष्यलोके शब्दादिविषयेषु 'मूर्च्छिता' अध्युपपन्ना 'मोहं जंति नरा असंवुडा' मोहो नाम कर्म्म तं जंति, मोहतश्च गर्भजन्ममरणादिः स एव संसारक्रमः, असंवुडा हिंसादिएहिं इंदिएहिं वा, यतश्चैवं तेन 'जयतं विहराहि जोगवं' वृत्तं ॥९९॥ जययं नाम गामे एगराईयं नगरे पंचराइयं यत्नतः, योगो नाम संयम एव, योगो यस्यास्तीति स भवति योगवान्, जोगा वा जस्स वसे वट्टंति स भवति योगवान्, णाणादीया, अथवा योगवानिति समितिगुप्तिषु नित्योपयुक्तः, स्वाधीनयोग इत्यर्थः, यो हि अन्यत् करोति अन्यत्र चोपयुक्तः स हि तत्प्रवृत्तयोगं प्रति अयोगवानेव भवति, लोगेऽपि च वक्तारो भवंति–विमना अहं, तेन मया नोपलक्षितमित्यतः स्वाधीनयोग एव योगवान्, स्यात्-किमर्थं नित्योपयोगः?, उच्यते, 'अणुपाणा पंथा दुरुत्तरा' अणवः प्राणा येषु ते इमे भवंति अणुपाणा–सूक्ष्माः, यदुक्तं भवति तानविराधयद्भिः, दुःखेन उत्तीर्यन्त इति दुरुत्तराः, अतः अणुपत्थि पाणा अणुपत्थि बीयहरितादि, 'अणुसासणमेव परक्कमे' अनुशास्यतेऽनेनेत्यनुशासनं–सूत्रं तद्यथा सूत्रोपदेशेनानुशास्यते यच्चाचार्यैस्तदन्तरा अननुशासनमेव पराक्रमेः–भृशं क्रमेः, स्यात्केनेदमनुशासनं?, उच्यते, 'वीरेहिं सम्मं पवेदितं' नित्यमात्मनि–गुरु-

पुरुषेषु च बहुवचनं, तेन वीरेहिं, सम्मं पवेदितं, अथवा सर्व एवार्हन्तो वीरास्तै प्रवेदितं, स्यादेतत्, के वीरा इति?, उच्यते, 'वीरा विरता हु पावका' वृत्तं ॥१००॥ यो विरतः स वीरः, कुतो?, पापात्, अथवा विराजमानाः विदालयंतीति वा वीराः— सम्यगुत्थिताः संजमसमुट्ठाणेणं, स्यात्किं पापकं यतस्ते विरताः?, उच्यते, 'कोधकातरियादीपीमणा' कातरिया णाम माया, क्रोधग्गहणात्मानोऽपि गृहीतः, कातरियाग्रहणाल्लोभः, पीपणा णाम क्रोधकातरिकादयः कपायाः किं पीपयंति? ज्ञानदर्शनचारित्राणि, अथवा त एव वीराः पीषणा, पीसणा दव्वे भावे य, दव्वे कुंकुमादि पसत्थदव्वपीसणा, वप्पादि अप्पसत्थपीसणा, भावे पसत्थभावपीसणा य अप्पसत्थभावपीसणा य, अपसत्थभावपीसणेहिं अहिकारो, त एवं पीसणा 'पाणे ण हणंति सव्वसो' सव्वसो नाम सव्वप्पकारेण योगत्रिककरणत्रिकेण, पापं नाम कर्म्म, येन च हिंसादिकर्म्मणा तत्पापं बध्यते तस्मिन् कारणे कार्योपचारं कृत्वाऽपदीश्यते 'पापाओ विरताभिणिव्वुडा' अभिमुखं णिव्वुडा अभिणिव्वुडा अभिप्रसन्नाः, यथोष्णमुदकं सीतं भूतं णिव्वुडमित्यपदिश्यते एवं, अथवा कपायोपशमाच्छीतीभूता अभिनिव्वुडा वुचंति, स्यात् तस्याभिनिर्वृत्तात्मनः साधोः परीपहोपमर्गाः प्रादुर्भवेयुः, ततस्तेन इदमालंबनं कृत्वा अहियासेतव्वं 'णवि ता अहमेव लुप्पए' वृत्ते ॥ १०१ ॥ नाहमेक एव शीतोष्णदंशमशकादिभिः परीपहोपसर्गैर्लुप्येत्ति, अन्नेऽवि असंयता पुत्रदारभरणादिभिः क्लेशैर्लुप्यन्ते, तथा च चौरपारदारिकादयः पराधीना लुप्यन्ते, अनपराधिनोऽपि कर्षकादयः करभरविष्ट्यादिभिरुपक्लेशैर्लुप्यन्ते, 'एवं सहिते' एवम्—अनेन प्रकारेण, सहिते णाणादीहिं, आत्मनो वा हितः सहितः, अधिकं पृथग्जनान् पश्यति अधिपश्यति, अनिहो नाम परीषहोपसर्गैर्न निहन्यते, तवसंजमेसु वा संतपरक्कमं ण णिहेति, 'से' इति णिद्देसे स एव भिक्षुः, कथंचित्परीषहोपसर्गैः स्पृश्यते ततः सो पुट्ठोऽधिया-

सए, अकारलोपो द्रष्टव्यः, स एवं परीषहसहिष्णुः "धुणिया कुलियं च लेववं" वृत्तं ॥१०२॥ धुणिया णाम धुणेज्जा कम्मं, कथं ?, जहा करणकुड्डं उभयोपासे लित्तं चिरेण कालेण जुण्णलेवं, सततं लिप्पंते व जोगं वा लेईमं, उपमाने वति, 'कसए'त्ति कृशं कुर्यात्, दिह्यत इति देहः यथा कुड्डं लकुटादिभिः प्रहारैः लेपापगमात् कृशीभवति एवं साधुरनशनादिभिः तपोविशेषैः कृशं देहं कुणंति, देहे च सम्यक्तपोभिरेवं कृश्यमाणे कर्म्मदेहोऽप्यपकृश्यते एव, द्रव्यकर्षणा कुड्डे शरीरे वा, भावकर्षणा रागद्वेषौ कर्षयति, त एवं अनशनादितपोयुक्ताः रागद्वेषापकृष्टाः 'अविहिंसामेव पव्वए' न विहिंसा २ अतस्तामविहिंसां पव्वए, कथमहिंसकः स्यादिति, 'अनुधम्मो' अनु पश्चाद्भावे यथाऽन्यैस्तीर्थकरैस्तथा वर्द्धमानेनापि मुनिना प्रवेदितं, अनुधर्म्मः–सूक्ष्मो वा धर्म्मः, पुष्पवत् वृत्तं, अप्पसत्थभावधुणणं, तंमि विधुए कम्मरयो विधुत एव भवति, स्यात्–कथं धूयते ?, 'सउणी उ जह पंसुगुंडिता' वृत्तं ॥ १०३ ॥ सउणि–काउल्ली, धूलीए वा लेट्टितुं तद्रजः पक्षातो धुव्वति–ध्वंसयति सितं–बद्धं, रंजयतीति रजः, एषो दृष्टान्तः 'एवं दविओवधाणवं' दविओ रागदोसरहितो, द्रव्यमात्रमेव, उव० उपदधातीति उपधानं तदस्यास्तीत्युपधानवान्, कर्म्म क्षपति, 'तवस्सि माहणो' समणेत्ति वा माहणेत्ति वा, अथ तं कश्चित् "उट्ठितमणगारमेसणं" वृत्तं ॥१०४॥ उट्ठितो णाम धर्मे प्रव्रज्यायां, नास्यागारं विद्यते अनगारः, अनगारत्वमेषति, अथवा मोक्षमेव एषति, समणाणं ठाणे ठितं चरित्ते णाणाइसु वा, तपःस्थितं तपस्सियं, बारसविहे तवे, तमेवं धम्मे दृढप्रतिज्ञं "डहरा वुड्ढा य पत्थए" डहरित्ति पुत्तनत्तुआदयः, तेसु विसेसतो णेहो भवति, कालुणियं कारंतेसु वड्ढमाइपितिमातुलपितृव्यादयः 'पत्थए'त्ति उप्पव्वातुं इच्छति, ते आजम्मएण ठिता तण्हाए छुहाए य अवि सुस्से ण तं लभेऊण, अवि मरेज्ज णवि उप्पव्वावेतुं सकेंति, जनानामधर्मव्यवस्थितच्चाज्ञनत्वस तान् पश्यति,

न तु स्वजनवत्, "जइ कालुणियाइं से कए" वृत्तं ॥१०५॥ कालुणिया णाम 'णाह! पिय! कंत! सामिय! उद्दंसण णिप्प-णत्त सुवण्णंमि। सव्वं सुण्णं पणइणि पुत्ता ते पितु त्रियोगवेलप्पा ॥१॥' सण्णा गामो गोट्ठी गणो व तं जत्थ होसि सण्णिहितो। दिप्पति सिरीए सुपुरिस! किं पुण णियगं घरद्दारं? ॥ २ ॥ पुत्रकारणाद् एकमपि ताव कुलतंतुवर्द्धनं पितृपिंडदं धनगोप्तारं च जनयस्व पुत्रं, ततो यास्यसि, एवं कलुणाणि रुदंता 'दवियं'ति दविओ-रागदोपरहिओ, भिक्खणशीलो भिक्खू, सम्यगुत्थितं समुट्ठितं संजमुट्ठाणेण समुट्ठितं 'णो लब्भति णं'ति ण सकेति 'सण्णवेत्तए'त्ति आणेतुं 'जइ णं कामेहि भा(ला)विया'वृत्तं ॥१०६॥ यदीत्यभ्युपगमे, कामा-सद्दादि धणाइ वा 'लाविय'त्ति णिमंतणा, जइ कामेहिं धणेण वा बहुप्पगारं उवणिमंतेज्ज बंधित्ता वा घरं आणेज्ज 'तं जीवितणावकंखिणं' तमिति-तं साधुं जीवितं-असंजमजीवितं नावकांक्षति नावकांक्षिणं 'णो लब्भंति णं सण्ण-वित्तए' नोकारः प्रतिषेधे, लब्भतित्ति ण ते लभंते सण्णवेत्तए, किंच-'सेहंति अ णं ममाइणो''वृत्तं ॥१०७॥ असंजमं ममा-यंतित्ति ममायिनः ते मातिपितिख्निपतिभायारो 'सेहंते'त्ति स्हावेन्ति, कथं सेहावेंति?-'पोसाहि ण पासओ तुम' तुमं अतीव पासओ जं अतीव पस्ससि, भोगनिरिक्खितो भवान्, जतो एक एवात्मा पायभीरु पासएत्ति प्रवचनवयणेणं, कहं अम्हेहिं दुक्खि-ताणि ण पाससित्ति, यदि त्वं एवं दीर्घदर्शी परलोगंपि जहाहि उत्तमंति, इमो ताव त्विमो लोगो जढो, अम्हेहि य तुज्झ निमि-त्तेण अद्वितीए किलिस्समाणेहिं अम्ह य वुड्ढत्तणे सुस्सुसाए अकीरमाणीए पुत्तदारे य अभरिज्जमाणे य परलोगोवि तं णं भवि-स्सति, उक्तं च-'या गतिः क्लेशदग्धानां, गृहेषु गृहमेधिनाम्। पुत्रदारं भरतानां, तां गतिं व्रज पुत्रक! ॥ १ ॥' उत्तमो नाम तत्र एव मातापितृसुश्रूषया उत्तमो लोको भविष्यति, अन्यथा त्वधमः, एवं तैरुपसर्गैः क्रियमाणैः किञ्चिदेवं धर्म्मकातरः 'अण्णे

अण्णेहिं मुच्छिता' वृत्तं ॥ १०८ ॥ अन्योऽन्येषु मूर्च्छिताः, तद्यथा—कश्चिद्भार्यायां कश्चित्पुत्रे कश्चिन्मातरि पितरि वा 'मोहं जंति णरा असंवुडा' मुह्यते येन स मोहः-कर्म्म अज्ञानं वा तत्कृतो वा नानायोनिगहनः संसारः, अथवा स्वजनस्नेहमोहिताः कृत्याकृत्ये न जानंति, न संवृताः असंवृताः—इन्द्रियनोइन्द्रियतः संवररहिता 'विसमं विसमेहिं गाहिया' विसमो णाम असंजमो तमसंजमं असंयतैरेव ग्राहिता, 'ते पावेहिं पुणो व गब्भिता' पापानि—छेदनभेदनविशसनमारणादीनि प्राणिवधादीनि वा तेषु पापेषु वर्त्तमाना पुनरवि गब्भीभूया उन्मार्गमाचरंतो न लज्जंते, पुराणश्मशानचिंतकमांसखादनपिशाचहस्तावसारणं, अहं संसारस्स ण बीभेमि, कुतस्तर्हि ?, तव यतश्चैवं 'दविए व समिक्ख पंडिते' वृत्तं ॥ १०९ ॥ दविक उक्तः एवम्—अनेन प्रकारेण योऽदमुक्तः सम्यक् ईक्ष्य समीक्ष्य पापं—हिंसादि, अन्यथा पाठस्तु 'तम्हा दविइक्ख पंडिते' तस्मादेवं ज्ञात्वा विरताणं अविरताणं च गुणदोसे पावाओ विरता अट्ठारसट्ठाणाओ सयणाओ व विरतो भवाहि, 'अभिणिव्वुडो' असंजमउण्हाओ सीतीभूतो 'पणता वीरा महाविधिं' भृशं नताः प्रणताः प्रणंतार इत्यर्थः, कतरं ?, जो हेट्ठा संबोहणमग्गो भणितो, वीराः उक्ताः, वीही नाम मार्गो चक्रवीथिवत् महती वीही महावीही, अथवा भाववीही एव महावीधी, तत्र द्रव्यवीधी नगरगामादिपंथाः भाववीधी तु सिद्धिपंथाः 'णेआउअं' शिवं, पाठविशेषस्तु 'प्रणता वीधीमेतमणुत्तरं,' एतदिति भाववीधीं जं भणिहामि अणुत्तरं—असरिसं अणुत्तरं वा ठाणणाणादि, सेहनं सिद्धिः, पद्यत इति पंथाः, नयतीति नैयायिकः, शिवं निरोगं, धुवं वा धुवो सासओ स एवं प्रणतः 'वेयालियमग्गमागतो' वुत्तं ॥११०॥ वैतालिकमुक्तं, अथवा विदालयतीति वैदालिकः-भगवानेव—वैतालिकस्य मार्गः वैतालिकमार्गः तं आगतः, प्राप्त इत्यर्थः,'मणसा वयसा काएण संवुडे'त्ति गुत्तो 'चिच्चा वित्तं च णातयो' चिच्चा णाम त्यक्त्वा वित्तं बाह्यमब्भिंतरं

च, वाह्यं गोमहिष्यादि अब्भितरं हिरण्णसुवण्णादि, अथवा अभ्यन्तरं विद्याबुद्धिकौशल्यादि, शेषं बाह्यं, 'णातय'त्ति पुव्वावरसंस्तुता, आरंभस्तु पचनछेदनादि प्राणातिपातो वा चशब्दात् शेषा अवयवा अपि, चिच्चा अपि वर्त्तते, संवुडे इंदिएहिं, चरेदिति अनुमतार्थे, अथवा परिव्वइज्जासित्तिबेमि ॥ वेयालिए पढमो उद्देसओ सम्मत्तो २-१॥

उद्देसत्थाहिगारो माणो वज्जेतव्वो, तत्थ गाथा—तवसंजमणाणेसुवि जइ माणो वज्जिओ महेसीहिं। अत्तसमुक्कसणट्ठा किं पुण हीलामणु अण्णेसिं ॥४३॥ महातवस्सिणा-संजमे अतीव अप्पमत्तेणं अतीव बहुस्सुतेण जइ ताव माणो वज्जिओ तेन तपस्वित्वे अप्रमत्तत्वे बहुश्रुतत्वे वा गव्वं न याति, किमग पुण नातिकृत्स्नतपोयुक्तेन प्रमादवता अल्पश्रुतेन वा गव्वो कायव्वो ? परो वा हीलेतव्वो ?, किंचान्यत्-'जइ ताव णिज्जरमतो पडिसिद्धो अट्ठमाणमहणेहिं। अवसेस मयट्ठाणा परिहरियव्वा पयत्तेणं ॥४४॥ भणिओ य उद्देसत्थाहियारो, सुत्ताभिसंबंधो पुण उक्तं प्रथमस्यान्ते—चिच्चा वित्तं च णातयो, एवं वित्तं स्वजनारंभं विहाय तपसि स्थितत्वात् 'तयसं व जहाइ से रयं'वृत्तं ॥१११॥ तया णाम कंचुओ, स्वमित्यात्मीयां, उपमाने वति उरगवत्, 'स' इति स पूर्वविवक्षितः साधुः, रज्यत इति रजः, तत्केन जहाति ?—अकषायत्वेनेति वाक्यशेषः, अकषायस्य हि सर्प्पत्वगिव च हीयति रजः, 'इति संखाय मुणी ण मज्जए' इति—उपप्रदर्शने 'एवं संखाए'त्ति एवं परिगणेत्ता, एवं ज्ञात्वेत्यर्थः, 'ण मज्जए'त्ति न मदं कुर्यात्, तत्केन मज्जते ? 'गोयण्णयरेण जे विए' गोत्रं नाम जातिः कुलं च गृह्यते, अन्यतरग्रहणात् क्षत्रियः ब्राह्मणः इत्यादि, अथवा अन्यतरग्रहणात् शेषाण्यपि मदस्थानानि गृहीतानि भवंति, इखिणी णाम खिंसणा णिंदणा हीलणा, अन्ये ब्रुवते रिक्तता, अथवा गोतण्णतरेण माहणे—साधू, अहिंसगो सुन्दरो अण्णो असोभणा, स्यात् य एषा मदानां एकेन नैकैर्वा मदस्थानैर्मत्तः परं परिभवति

तस्य को दोषः ?, उच्यते—'जो परिभवति परं जनं' वृत्तं ॥११२॥ परो नाम आत्मव्यतिरिक्तः सपक्षः परपक्षो वा, अथवा परः—अस्वजनः, परिभवो नाम जात्यादिश्रेष्ठस्त्वं हीनजातिरिति, एवं कुलादिषु, नान्यत्रापि, सो अणादीए यपज्जंते अणवदग्गे 'संसारे परियट्टति चिरं' सर्वतो वर्त्तते परिवर्त्तते, 'चिर' मिति अणंतकालं, विसेसेण कुत्थिता सुकुत्थिता तासु जातिसु एगिंदियबेइंदियादिसु, यतश्चैवं तेन 'अदु इंखिणिया तु पाविया' अदु इति यदुक्तकारणात् इंखिणिका प्रागुक्ता पातयंतीति पातिका, वानरपिटिका इह सुघरीदृष्टान्तः, परलोके कोकिलकश्च परिभट्ठउ सडूसुणओ जाओ, इति उपप्रदर्शनार्थं, 'एवं संखाए' एवं परिगण्य मुणी 'ण मज्जए' मदं न कुर्यात्, 'जे यावि अणातए सिया' वृत्तं ॥११३॥ जेत्ति अणिद्दिट्ठणिद्देसे नान्यो नायकोऽस्यास्तीत्यनायकः—चक्रवर्त्ति बलदेवो महामंडलिओ वा, वासुदेवो ण पव्वयति, निदानकृतत्वात्, तेन नाधिकारः, पेसगपेसगो णाम तेसिं चेव चक्रिमादीणं जो पट्ठिगावाहगो प्रव्रजितः स्यात्, असावपि तं चक्रवर्ति प्रव्रजितः पूर्वं दासदासं बारसावत्तेण वंदणेण वंदति, वंदणमाणोऽपि वा 'इदं मोणपदमुवट्ठिए'त्ति इदमिति आरुहतं मुनेः पदं मौनं पद्यतेऽनेनेति पदं—मोक्षं गम्यत इत्यर्थः, उपेत्य स्थितः उवट्ठितो, न तेन पूर्वस्वामिना लज्जा कर्त्तव्या जहाऽहं पुव्वदासदासं वंदाविज्जामि, इतरेणापि न गर्वं, अहं सामिगसामिणा पूइज्जामि, 'समन्नं'ति अरागद्वेषवानित्यर्थः, 'सदा' सर्व्वकालं चरेदित्यनुमतार्थः, स्यात्—कथं ताभ्यां लज्जामदौ न कर्त्तव्याविति ?, उच्यते, 'समयण्णयरम्मि संयमे' वृत्तं ॥११४॥ ते हि सयं तत्त्वं प्रति समा चेव, अथवाऽयमपि छेदोपस्थानीये, एवं परिहारविशुद्धिकादिषु शेषेष्वपीति, अरिस्स मि० वृत्तं, तौ हि संयमत्वं प्रति समावेव, अथ समेत्ति एकस्मिन्नेव तौ संयमस्थाने वर्त्तयेतां, अण्णयरे वत्ति विसमे वा छट्ठाणपडितस्स, तेसु सम्यक्त्वादिष्वसंजम इतिकृत्वा अन्यतरे अधिके वर्त्तमानः

पूज्यः, संयतत्वादेव, अथवा जे यावि भवे अणायगे, जेविय पेसगस्स पेसएत्ति, एगिगो माणेऽर्ह उक्तः, इह तु 'समअणणतरंमि वा सुते समेऽवि सुएणमिमं परिचिततरंतिकाउं स माणो ण कायव्वो, लहुं वा मे अधीतंति, अण्णयरं तु एगो गणी एगो वायगो, पूर्वगतं वाचितं येन स वाचकः, न च वाचकेन मानः कार्यः, संशुद्धो स एव, संयमः शुद्धः यत्रासौ वर्त्तते, अथवा स एवं लज्जामददोसादिएहिं संसुद्धो 'समणे'त्ति सम्यक् मणे समणे वा समणो, परि समंता सव्वातियारसुद्धो सव्वओ वा परि वए परिव्वए, स्यात्कियच्चिरं कालं?, उच्यते 'जा आवकथा समाहिते' यावदस्य कथा प्रवर्त्तते देवदत्तो यज्ञदत्तो वा, दविओ णाम रोगद्दोसरहिओ, स्यान्मृतरयापि कथा प्रवर्त्तते तत उच्यते 'कालमकासि पंडिते' यावत्कालं न करोति तावन्मानादिदोषरहितेन भवितव्यं, स्यात्किल किमालंबनं कृत्वेति यतितव्यं?, उच्यते 'दूरं अणुपस्सिया' वृत्तं ॥११५॥ दूरं नाम दीर्घं अनुपश्यति तं धम्ममणागतं, तथा धर्म्मः स्वभाव इत्यर्थः, वर्त्तमानो धर्म्मो हि कालानादित्वाद् दूरः, स तु अविरतत्वान्मानादिमदमत्तस्य दुक्खभूयिष्ठोऽतिक्रान्तः, किं च इमेण खलु जीवेण अतीतद्धाए उच्चणीयमज्झिमासु गतिसु असतिं उच्चगोते असतिं णीयगोते होत्था, तथा च अतीतकाले प्राप्तानि सर्वदुःखान्यनेकशः, एवमनागतधर्म्ममपि, अथवा दूरमणुपस्सिअत्ति दढं पस्सिय, अथवा मोक्षं दूरं पस्सिय दुर्ल्लभबोधितां पस्सिय जात्यादिमदमत्तस्य च दूरतः श्रेयः एवमणुपस्सिय इत्येवमादि अतीतानागतान् धर्म्मान् अनुपस्सिता 'अट्ठे फरुसेहिं माहणे' फरुसा नाम स्नेहवियुक्तैः वाचिकाः कायिकाश्चोपसर्ग्गा क्रियन्ते, तत्र वाचिकाः आक्रोशहीलनाद्याः कायिकास्तु वधबंधनताडनाङ्कनच्छेदनमारणांताः, अथवा प्रतिलोमा फरुसा, तैरुदीर्णैः 'अवि य हण्णू' अपि हन्यमानाः अविहण्णू यथा खन्धकशिष्याः, न तु खन्दकः, 'समयंसि रीयति'त्ति यथा समयेऽतिदिष्टं तथा रीयते प्रसन्न इत्यर्थः, पठ्यते च 'अविहण्णू

समयाधियासए' अस्यार्थः अविहण्णू-अविहन्यमानः सम्यक् अहियासए, अथवा अविहण्णू इति हन्यमानो न हन्यात् किंचित्, अथवा धर्म्ममस्योपदिशेत् स कीटकधर्म्मकथिक उच्यते, 'पण्णसमत्ते सया जए' वृत्तं ॥११६॥ प्रच्छंति तमिति प्रश्नः यावत्प्रश्नान् परः पृच्छेत् तं व्याकर्तुं समर्थः, पठ्यते च-'पण्हसमत्ते सदा जए' समाप्तप्रश्न इत्यर्थः, सदाजएत्ति ज्ञानवान् अप्रमत्तश्च, अयतस्य हि क्षीरं परिचिकित्सिकस्येव न वचः प्रमाणं भवति, उक्तं हि-"अड्डितो ण ठवेति परं" समिता णाम सम्मं धम्मं उदाहरेज्ज, जहा पुण्णस्स कत्थति तथा तुच्छस्स कत्थति, 'सुहुमे हु सया अलूसए' सुहुमो नाम स हि सुहुमेणवि अतिचारेण लूसिज्जति, कथयतो वा सूक्ष्मेणापि आत्मोत्कर्षेण परहीलया वा लूसिज्जति, पूयागारवसक्कारहेउं वा कथयतो लूसेति, अहवा सुहुमेत्ति सूक्ष्मबुद्धिः कथयेत्, अलूषकस्तु स एवमनाशंसी, न च मार्गविराधना करोति, अपरियच्छंते य परे ण कुप्पेज्जा, णेव कथणलद्धीसंपण्णताए माणी माहणो होज्जा, अथवा कथयंतो ण परं कोवये-अन्यतरं कषायं गमयेत्, स एवं 'बहुजणणमणंमि संवुडे०' वृत्तं ॥११७॥ बहुजनं नामयतीति बहुजननामने, अहवा नम्यते-स्तूयत इत्यर्थः, स धर्म्म एव, सर्व्वलोको हि धर्म्ममेव प्रणतः, न हि कश्चित्परमाधार्मिकोऽपि ब्रवीति-अधर्म्मं करेमि, तत्रोदाहरणं-सेणिओ राया, तस्स अत्थाणीए धर्म्मजिज्ञासायां के धम्मिया इति, ततो परिसदेहिं भण्णति-दुल्लभा धम्मिया, पायं अधम्मिओ लोओ, अभयो भण्णति-लोगस्स भावपाएण एस पइण्णा जहा वयं धम्मिया इति, परिसाए असद्दहंतीए अभओ भण्णति-परिक्खामो, ततो रायाणुन्नाए सितासिताणि दुवे भवणाणि कारवेति, पउरजणवया भणिया-जे तुम्हं धम्मिया ते धवलं गिहं पविसंतु, अधम्मिया असियमिति, ततो ते सव्वे पउरजणा धवलगृहमणुपविट्ठा, अधिगारिगेहिं पुच्छिता-किं भवंतो धम्मं करेहिंति ?, तत्थेगो भणति-अथं करिस्सगो, तत्थ मे अणेगेहिं सउणसहस्सेहिं

धण्णं उवजीविज्जति, अण्णो भणति-अहं वणिज्जो, कलोपजीवि बंभणो मे णिच्चगं भुंजतित्ति, अण्णो भणति-अहं कुडुंबभरणपवित्तो किलेसभागी, किं बहुणा ?, सोयरियादयोऽवि कुलधर्म्मानुवर्तित्वाद्वयमपि धम्मिया, एवं धवलगिहमणुपविट्ठा, उक्तं च-"सोत-सुतघोररणमुह०" अथ तत्थ दुवे सावगा सकृत्मद्यपाननिवृत्तिकृतभङ्गा असितभवणमणुपविट्ठा पुच्छिता भणन्ति—सुसाहुणो सुसावगा य धम्मिया जे सया अपमत्ता, अम्हे पुण पमादिणो स्वकृतमद्यपाननिवृत्तिकृतभंगा ण धवलगिहारुहा, अतो असित-भवणमणुपविट्ठा इत्येवं बहुजननमितो धर्म्म इति, तस्मिन् बहुजननमिते संवृतात्मा भवेदिति वाक्यशेषः, अन्ये त्वाहुः-बहुजन-नमनो-लोभः, सर्वो हि लोकस्तस्मिन् प्रणतः, असंयतास्तावत सर्वे शब्दादिविषयप्रणताः, प्रमत्तसंयता अपि तेनैव केचित्प्रणताः, वीतकषायास्त्वप्रणताः, जे य जयणा अप्पमत्ता इति तेऽपि न प्रणताः, उक्तं च—'क्रोधस्स उदयणिरोधा वा उदयपत्तस्स वा कोहस्स विहलीकरणं' एवं योगेन्द्रियाणामपि वक्तव्यं, संयतो नाम विरतः निवृत्त इत्यर्थः, 'सव्वट्ठेसु सदा अणिस्सिते'त्ति सव्वेसु इंदियत्थेसु यावंतो वा असंयमार्थाः अथवा ऐहिकामुष्मिकेषु अणिस्सितो नाम नाकांक्षति 'हरदे व तुमे अणाइलो' हरदेत्ति, महासमुद्रः, स हि तक्रादिभिः महामत्स्यैः स्फुरद्भिरपि नाकुलजलो भवति, न क्षुब्धजल इत्यर्थः, पद्ममहापद्मादयो वा ह्रदाः स्वच्छ-प्रसन्नगंभीरजलाः गंभीरत्वादनाकुलाः, एवमसावपि पूर्वापरज्ञेयपरिशुद्धस्वच्छज्ञानवान् प्रसन्नवाङ्मनाः न च परप्रवादिभिः शक्यते विक्षोभयितु इत्यनाकुलः, क्रोधादीहि वा अणाइलो, अथवा अणाइल इति निरुद्धाश्रवः अनातुरो—न ग्लायति धर्म्मं कथयन्, 'धम्मं प्रादुरकासव'त्ति प्रादुः प्रकाशने स भगवान् आर्यसुधर्म्मः अण्णतरो वा गणधरो ह्रद इवानाकुलः धर्म्मं प्रादुरकार्षीत्, एवमन्येऽपि स्थविराः प्रादुरकार्षीन् प्रादुष्कुर्वन्ति करिष्यंति च, कस्यपस्यायं काश्यपः, स एवं लक्षणकं धर्म्मं कथयति, तं च वा

'बहवो पाणा पुढो सिया०' वृत्तं ॥ ११८ ॥ अथवोपदेश एवायं, बहवो प्राणा पुढो सिता, बहव इत्यनन्ताः, पृथक् पृथक् सिता पुढोसिता, तंजहा–पुढविकाइयत्ताए०, तेषां तु प्रत्येकानन्तानामप्येको धर्म्मः समान एव, सुखप्रियत्वं 'समियं उवेहाए'त्ति समिता णाम समता, प्रत्येकाश्रयेऽपि सति अभीष्टसुखता दुःखोद्वेगता च समानमेतत्, अथवा समिया इति समं उवेहिताः जे मोणपदं उवट्ठिए, मुनेरिदं मौनं, विरमणं विरतिः तेषामतिपातादीनां अकासित्ति करिष्यसि, पापाड्डीनः पंडितः, का भावना ?, यथा तवैते इष्टानिष्टे सुखदुःखे एवं पाणाणमवि इत्येवं मत्वा विरतिं तेषामकासि पंडिते, स एव विरतात्मा 'धम्मस्स य पारए मुणी०' वृत्तं ॥ ११९ ॥ धम्मो दुविहो–सुतधम्मो चरित्तधम्मो य, तयोः पारं गच्छतीति पारगः, श्रुतज्ञानपारंगतः चोद्दसपुव्वी, पारं वा कांक्षति, एवं पारं गतः कांक्षति वा अकषायः, तस्य च चारित्रमधिकृत्यापदिश्यते, आरंभो नाम जीवकायसमारंभस्तस्यांते व्यवस्थितो, नारभत इत्यर्थः, जे य पुण आरंभपरिग्गहे वट्टंति ममायंति वा ते तं परिग्गहं णट्ठविणट्ठं 'सोयंति य णं ममायणो' अलभ्यमाणमपि यथेष्टपरिग्गहं सोयंति णं ममाइणो, उक्तं हि–"परिग्गहेष्वप्राप्तनष्टेषु काङ्क्षाशोकौ, प्राप्तेषु च रक्षणमुपभोगे चाऽवृत्तिः" णो लब्भति णियं परिग्गहंति अग्गिसामण्णत्ताए चोरसामण्णत्ताए णितओ ण भवति, अयमपरकल्पः तमिव, धम्मस्स य पारए मुणी, आरंभस्स य अन्तिअट्ठितं सोयंति य णं ममाइणो अम्हे सुहिता, तुम्हं संतविभवोऽवि अतिदुक्करं तवचरणं करेसि, जेणं ममायंते तेणं ममायणो–मातापुत्रादयो णो लब्भंति परिग्गहंति, स तेषां नित्यं वशकः आसीदिति नित्यं परिग्रहः परः, ततस्तत्प्रत्ययिकं णो लभति णितियं परिग्गहं, अमुमेवार्थं नागार्ज्जुनीया विकल्पयंति-सोऊण तयं उवट्ठितं केयि गिही विग्घेण उट्ठिता। धम्मंमि इहं अणुत्तरे, तंपि जिणेज्ज इमेण पंडिते 'इह लोग दुहावहं विदा परलोगे य दुहं दुहावहं' ॥ १२० ॥ कृषिभृत-

चौरादीनां इहलोगे एव दुहावहं धणं, उक्तं हि—अममा जनयंति कांक्षितां, निहिता मानसचौरजं भयम्। विद्वंति जना हि०" परलोकेऽपि च दुहं असाद्धनोपार्ज्जनदुःखात् सुमहत्तरं दुःखं समावहंतीत्यतो दुहादुहावहा, अथवा दुहादुहा वा पुनरनन्ते संसारे पर्यटन्तः शरीरादिदुःखं समावहंति 'विद्धंसणधम्ममेव या' अग्निचौराद्युपद्रवैः कालपरिणामतश्च विद्धंपणधम्ममेव या इत्येवं विद्वान् मत्वा को नाम आगारमावसे ?, किचान्यत्–पव्वइतेणवि न मत्कारवंदणणमंमणाउ वहु माजितव्वा, उक्तं च तत्थ—'महता पलिगोह जाणिया०' वृत्तं ॥१२१॥ परिगोहो णाम परिष्वंगः, दव्वे परिगोहो पंको भावे अभिलापो बाह्याभ्यन्तरवस्तुषु, परस्परतः साधूनां जावि वंदणणमंमणा सावि ताव परिगोहो भवति, किमंग पुण सद्दादिविसयासेवणं ?, अथवा प्रव्रजितस्यापि पूजासत्कारः क्रियते, किमंग पुज रायादिविभवासंसा ?,'सुहुमे सल्ले दुरुद्धरे' सूचनीयं सूक्ष्मं, कथं ?, शक्यमाक्रोशताडनादि तितिक्षितुं, दुःखतर तु वन्द्यमाने पूज्यमाने वा विषयैर्वा विलोभ्यमाने निःसंगतां भावयितुं, इत्येवं सूक्ष्मं भावशल्यं दुःखमुद्धर्तुं हृदयादिति वाक्यशेषः, इत्येवं मत्वा विद्वान् 'पयहेज्ज संथवं' सम्यक् स्तवः सतो वा स्तवः संथवो, नागार्ज्जुनीयास्तु पठंति-पलिमंथ महं विजाणिया जाविय वंदणपूयणा महं। सुहुमं सल्लं दुरुद्धरं तंपि जिणे एएण पंडिए''एगे चरे ठाण आसगे०' वृत्तं ॥१२२॥ द्रव्ये एगल्लविहारवान् भावे रागद्वेषरहितो वीतरागः, ठाणं–काउस्सग्गो आसणं–पीढफलगं भूमिपरिग्गहो वा सयणंति णुवण्णो, एगो रागद्वेषदोमरहितो, सव्वत्थ पवादणिवादसमविसमेसु ठाणणिसीयणमयणेसु एगभावेण भवितव्वं, णाणादिसमाहितो, चरेदित्यणुमतार्थे, भिक्खू 'उवहाणवीरिए' उपधानवीर्यवानिति तपोवीर्यवान्, 'वइगुत्ते'त्ति वयगुत्तिगहिता 'अज्झप्पसंवुडे'त्ति मणोगुत्ती गहिता, पूर्वार्द्धेन तु कायगुप्तिः। इदाणिं जो सो एगल्लविहारी तं दुव्वधरे य णिकारणेण भण्णाति—'णो पीहे ण याव-

वंगुणे' वृत्तं ॥१२३॥ पिहितं णाम ढक्कियं, अवगुत्तदुवारिए सुण्णघरे वा भिन्नघरे वा, शून्यं हितं शून्यं, शून्यं वा यत्राऽन्यो न भवति, पुट्ठो ण उदाहरे वयिं, चत्तारि भासाओ सोत्तूण उदाहरति वयिं, अवस्सं संबुज्झितुकामस्स वा एगनायं एगवागरणं वा जाव चत्तारि, णिसीयणट्ठाणे मोत्तूण सेसं वसधिं 'ण संमुच्छति'त्ति ण पमज्जति, 'णो संथडे तणे'त्ति ण वा तणाइं संथरेति, किमंग पुण किंत्ति पोत्तिं वा ?, स एवं सरीरोवस्सयादिसु अप्रतिबद्धः अणियतवासित्वात् 'जत्थऽत्थमिते अणाइले'वृत्तं ॥१२४॥ जत्थ से अत्थमिति सूरो जले थले वा तत्थ वसति, अणाइलो णाम परीषहोपसर्गैः नक्रैः समुद्रवत् नाकुलीक्रियते, समविसमाइं ठाणसयणासणाइं मुणीऽधियासए, न रागद्वेषौ गच्छेत्, तत्थ से अच्छमाणस्स 'चरगा अदुवावि भेरवा' चरंतीति चरका—पिपीलिकामत्कुणघृतपायिकादयः भेरवा—पिशाचश्वापदादयः सरीसृपा—अहिमूषिकादयः सव्वे अहियासएत्ति, एवमन्येऽपि 'तिरिंग्या मणुसा य दिव्विया' वृत्तं ॥ १२५ ॥ तिरिया चतुर्विधा उवसग्गा तिविहावि सेविया नामासेवित्वा अणुभूय 'लोमादीयंपि ण हारिसे' लूयत इति लोमा लोमहरिसो दुधा भवति—प्रतिलोमैर्भयात् अनुलोमैः प्रहर्षेण हासतः, आदिग्रहणात् दृष्टिमुखप्रसादो दैन्यं वा, 'सुन्नागारगते महामुणी' स तैर्भैरवैरप्युपसर्गैरुदीर्णैश्छिद्यमानो मार्यमाणो वा 'णो लाव मिकंख जीवितं' वृत्तं ॥ १२६ ॥ अनुलोमैर्वा उदीर्णैः असंजमजीवितं ण वा पूयासक्कारं पत्थेज्ज, तेनैवं जीवितमनाकांक्षता पूजासत्कारौ च, भयानके वाऽऽवसथे वसता 'अब्भत्थमुवति भेरवा' अभ्यस्ता नाम आसेविता असकृद् अमकृत्सहमानेन जाता उदिता आसेविता अभ्यस्ता इत्यतः उपेन्ति—उपयान्ति भयानकाः, पठ्यते च—'अप्पुत्थं उवेंति भेरवा' अल्पा न बहवः पिशाचश्वापदव्यालादयः जीवितान्तयिका उवेंति, शीतोष्णदंशमशकादयस्तु उदीर्णा अपि शक्याऽधिषोढुमिति, अभ्यस्तत्वान्निराजितवारणस्येव भैरवा एव भवंति,

तस्यैवं 'उवनीततरस्स नाइणो०' वृत्तं ॥ १२७॥ भिक्षोः धर्म्ममुपनीतः परीषहजयं वा, अयं चोपनीतः २ अयमनयोरुपनीततरः ज्ञानदर्शनचारित्रेषु यस्यात्मा उपनीततरः स भवत्युपनीततरः, त्रायतीति त्राता, स च त्रिविधः—आत्म०पर०उभयत्राता—जिनकल्पिकार्हद्च्छत्रासिनः 'भयमानस्स विवित्तमासनं' इत्थीपसुपंडगविरहितं विवित्तं आसनग्रहणादुपाश्रयोऽपि गृहीतः 'सामाइयमाहु तस्स तं' समभावः सामाइयं आहुः तस्म तं समभावं सामाइयं तस्सेवंगुणजातियस्स सामायिकं, कतरं ?, चारित्तसामाइयं, आहु—उक्तवानिति तित्थकरो अज्जसुहम्मो वा सिस्साण कथेति, तस्य चारित्रधर्म्मः, किं करोति ?, यः आत्मानं भये न दर्शयति, न क्षुभ्यत इत्यर्थः, किंचान्यत्—'उसिणोदकतत्तभोयणो०' वृत्तं ॥१२८॥ उसिणग्रहणात् फासुगोदगं सोवीरगउण्होदगादीणि गहिताणि, तत्तग्गहणात् स्वाभाविकस्यातपोदकादेः प्रतिषेधार्थः, धर्मेण यस्यार्थः स भवति धम्मट्ठो, ह्री लज्जायां, असंयमं प्रति ह्रीर्यस्यास्ति स ह्रीमान् तस्य ह्रीमतः, स हि लोके शीतोदकं पिबन् लज्जते, ह्रीयत इत्यर्थः, तस्यैवमप्रमत्तस्य आमतः संसग्गि असाधु 'रायिहिं' राजादिभिस्तस्यासाध्वी, कथं ?, रिद्धिं दृष्ट्वा तं मा भून्मूर्च्छां कुर्यात्, मूर्च्छतश्च असमाधी भवति 'तथागतस्सवि'त्ति वैराग्यगतस्यापि, अथवा यथाऽन्ये, यथा जिनादयो गता वीतरागं तथा सोऽवि अप्रमादं प्रति गतः, इदानिं प्रमत्ता उच्यन्ते—'अधिकरणकरस्स भिक्खुणो०' वृत्तं ॥१२९॥ अधिकरणं करोतीति अधिकरणकरः, 'प्रसह्ये'ति आक्रम्य परपरिभवात् संबंधं स्नेहसंततिं दारयति ततः दारुणं, 'अट्ठे परिहायते ध्रुवं' अर्थो नामा मोक्षार्थः तत्कारणादीनि च ज्ञानादीनि परिहायंति, "जं अज्जियं समीखल्लएहिं तवणियमबंभमइएहिं। मा हु तयं छड्डेहिं य बहुतरयं सागपत्तेहिं ॥ १ ॥ एतेण कारणेणं अधिकारणं ण करेज्ज संजते स्वपक्षपरपक्षाभ्यामितिवाक्यशेषः, तस्यैव अधिकरणमकुर्वाणस्य 'सीतोदगपरिदुगुंछिणो' वृत्तं ॥ १३० ॥ सीतोदगं णाम अवि-

गतजीवं अफासुगं प्रती, प्रतिदुगुंछति णाम ण पिवति, यो हि यन्न सेवति स तत् जुगुप्सत्येव, जहा धीयारा गोमांसमद्यलसुनपलंडुं दुगुंछंति, न केवलं धीयारा गोमांसं दुगुंछंति, तदाशिनोऽपि जुगुप्संति, अप्पडिण्णो णाम अप्रतिज्ञः, नास्य प्रतिज्ञा भवति यथा मम अनेन तपसा इत्थं णाम भविष्यतीति, तंजहा—णो इहलोगट्ठताए तवं करोति० जहा धम्मिवयं भदन्ता, आलयाहारउवधिपूयाणिमित्तं वा अप्रतिज्ञः, लवं—कर्म्म येन तत्कर्म्म भवति ततः आश्रवात् स्तोकादप्यवसकति, तस्यैवंविधस्य 'सामायिकमाहु तस्स' जं तदेवास्य सामायिकं—चरित्रसामायिकं, यत्किं ?, न करोति, जं गिहिमत्ते असणं ण भक्खति, मा भूत् पच्छाकम्मदोसो, भविस्सति णट्ठे हिते वीसरिते, स एव सीतोदगवधः स्यादिति । किं च 'ण य संखतमाहु जीवितं' वृत्तं ॥ १३१॥ णहि छिन्नतंतुवत् इहं जीवितं पुनः शक्यते संस्कर्तुं, 'तथे'ति तेन प्रकारेण, बालजणो णाम असंयतजनः, प्रगल्भीभवति प्राणातिपातादिषु प्रवर्त्तमानो धृष्टो भवतीत्यर्थः, स एव बालः पापेषु कर्म्मसु प्रगल्भीभवन् तैरेव बाले पावेहि मज्जति हिंसादीहिं, तज्जणिएण वा कर्म्मणा मानभंडमिव मीयते पूर्यंत इत्यर्थः, मार्यते वा संसारे, 'इति संखाय मुणी ण मज्जति' इति संस्कार्यते, एवं परिगणय्य ण मज्जतित्ति—न मदं कुर्यात्—न कुप्येत, मानाधिकार एव असिन्नुदेशके वर्ण्यते, तेण इति संखाए मुणी ण मज्जति, क्रोधो माने(मदो)ऽपि गृहीतो, लोभस्तु 'छंदेण पलेति मायया' वृत्तं ॥१३२॥ छंदो णाम लोभः इच्छा प्रार्थना, तेण छंदेण प्रलीयते यं प्रजाः तासु तासु गतिषु भृशं लीयते—गच्छति, पठ्यते च 'छण्णेण पलेति मायया' छंदेणेति डंभेणोवहिणा कूटतुलकूटमानादिभिः तथा हिंसादिषु कर्म्मसु प्रवर्त्तते दंभेणेव, पलायितुमिच्छति कर्म्मबन्धात्, यथा मारेंतोऽवि य देवसुवरिं छुभति, महर्षिप्रणीतोऽयं मार्गः, तथा चित्तं न दूषयितव्यं इति, पापंडिनोऽपि शाक्यादयः छण्णेण पलायितुमिच्छंति कर्म्मबन्धात्, तद्यथा—संघ-

संतगा ग्रामाः, दासीदासहिरण्यादि च ते उपासगसंता वा, भागवता ब्रुवते—सव्वं देवो करेति, यथा छण्णेण तथा लोभादिभिरपि 'बहुमाये'ति उत्कंचणादि, पापंडिनोऽपि मायाबहुला कुकुडेहिं लोअं उवचरंति, उक्तं हि—कुकुडसाध्यो लोको नाकुक्कुटतः प्रवर्त्तते किंचित्। तस्मात् लोकस्यार्थे पितरं (अपि) सकुर्कुटं कुर्यात् ॥१॥' चित्तप्रामाण्यं वर्णयन्ति, मोहो नामाज्ञानं तेन प्रावृता छादिता इत्यर्थः, शासनाश्रितास्तु 'वियडेण पलेति माहणे' भावेनेति वाक्यशेषः, तेनाकुडिलेनापि अविकुत्थितेनाजिम्हेन, कुतः पलीयते ?, संसारात्, न केवलमात्मा शुद्धया पलीयते, बाह्येनापि पलीयते, तद्यथा—'सीउण्हं वयसाऽधियासए' सीते अप्रावृतः उण्णे आतापयति, अथवा सीता अनुलोमाः उण्णाः प्रतिलोमाः, वयसेति वाचा, यथा वयसा तथा मनसावि, एवं सेसिंदियदमोवि, किंच—जं बहुपसण्णं तं गेण्हाहि चिट्ठते, 'कुजए अपराजिए जहा०' वृत्तं ॥१३३॥ कुच्छितो जयः कुजयः द्यूतेण थोवं विढप्पति, यद्यपि अपराजितो अक्खेहि देवताप्रसादेन वा अक्खहितत्तेण वा अपराजितो तथापि कुत्थित एव जयः, अक्खापासगादिषु क्रीडाव्यवहाराः, अक्षैर्दीव्यति दिव्यं, दिव्यं चास्यास्तीति दिव्यवान्—क्रीडावान्, जह सो दिव्वं च कडमेव गहाय, णो कलिं णो त्रेतं णो चेव दावरं, उवसंहारः 'एवं लोगंसि ताइणो०' वृत्तं ॥ १३४ ॥ एवम्—अनेन प्रकारेण अस्मिँल्लोके पापंडलोगे वा 'ताइणो'त्ति आत्मपरोभयत्रायिणो—जिनतीर्थकरस्थविराः 'बुइते' उक्तः 'अयं'ति इमो जइधम्मो सुतचरित्तधम्मा य 'अनुत्तरे' बहुफले, अतुल्ये इत्यर्थः, 'तं गेण्ह हेतंति उत्तमं' तमिति तं धम्मं गेण्हाहि इहलोए परलोए य हितं, इहलोए आमोसहिलद्धीओ परलोए सिद्धी देवलोगसुकुलपच्चायादि, 'ते' इति तस्य ग्रहे, कस्य निर्देशः ?, उत्तमः—प्रधानः, धम्मं इति वर्त्तते, कडमिव द्यूतकरवत् सेसा तिण्णि आता, पासत्था अण्णतित्थिया गिहित्था य, अवहाय—छड्डेत्ता, को भवति ?, उच्यते, पंडितो भवति, किं

च—एषा हि शब्दादीनां त्वग्परीषह एव गरीयान् अत एवोच्यते 'उत्तरमणुयाण आहिता' वृत्तं ॥ १३५ ॥ उत्तरा णाम शेषविषयेभ्यः ग्रामधर्म्मा एव गरीयांसः, यथा मयाऽनुश्रुतं स्थविरेभ्यस्तैः पूर्वं श्रुतं पश्चात्तेभ्यो मया श्रुतं, उक्तं हि—"सुखस्यातिरसः स्वर्गः, स्वर्गस्यातिरसः स्त्रियः। गवामतिरसः क्षीरं, क्षीरस्यातिरसो घृतं ॥ १ ॥ सर्व्व एव वा विषयग्रामधर्म्मः, अथवा उत्तराः—शब्दादयो ग्रामधर्म्मा मनुष्याणां चक्रवर्तिबलदेववासुदेवमंडलिकानां तेसु उत्तरेसुवि 'जंसि विरता समुट्ठिता' जासु इत्थिगासु सम्यक् उट्ठिता समुत्थिताः, 'कासवस्स अनुधम्मचरिणो' काश्यपो—वर्द्धमानस्वामी काश्यपचीर्णानुचरणशीलाः कासवस्स अणुधम्मचारिणो, अथवा ऋषभ एव काश्यपः तेन चीर्णमनुचरंति यथोद्दिष्टं 'जे एत चरेंति आहितं' वृत्तं ॥ १३६ ॥ जे इति अणुद्दिट्ठणिद्देसे, जे अणुधम्मचरित्तं कुर्वन्ति, आहितं—आख्यातं, केण ?, 'णाएण महता' ज्ञातकुलीयेन महता इति, ज्ञातृत्वेऽपि सति राजसूनुना केवलज्ञानवता च, महाँश्चासौ ऋषिश्च महर्षिः, अथवा मोक्षेसिणा, ते उट्ठिता, उत्थिता नाम मोक्षाय, सम्यगुत्थिताः समुत्थिताः, न जमालिवत्, शाक्यादयोऽपि हि मोक्षार्थमभ्युत्थिताः, 'अन्योऽन्यं च सीदंतं सारेंति धर्म्मत' इति धर्म्मे सीदंतं, अथवा धम्मियाए पडिचोयणाए, अथवा धर्म्मे सालितं स्खलंतं वा धम्मियाए पडिचोयणाए धम्मिएणं, पडोआरेणं, धर्म्मे सम्यगवस्थितश्च भूत्वा 'मा पेह पुरापणामए' वृत्तं ॥ १३७ ॥ अमानोनाः प्रतिषेधे, मा प्रेक्षस्व, पुरा नाम पूर्व्वकालिए पुव्वरतपुव्वकीलितादि, प्रणामयंतीति प्रणामकाः दुग्गतिं संसारं वा प्रति धर्म्मे स्थितं, संक्षेपार्थस्तु पुव्वकीलितं ण सुमरेज्जा, धम्मं वा प्रति प्रणामयेदात्मानं, उवधिं दव्वे हिरण्णादि भावोवधिं अट्ठविधं कर्म्मं, अभिमुखं कंखेज्जासित्ति अभिकंखे उवधिं धुणित्तए, मानाधिकारेऽनुवर्त्तमाने 'जे दूवणतेहि णो णता' जे इति अणिद्दिट्ठणिद्देसे दुष्टं प्रणताः दूपनताः शाक्यादयः, ते हि मोक्षाय प्रवृत्ता अपि

विषयेषु प्रणता रसादिषु, नेति प्रतिषेधे, आरंभपरिग्रहेषु ये न नता ते जानंति समाहितं, त एव ज्ञानवन्तः ये सम्यङ्मार्गाश्रिताः, न तु अज्ञानिनो, न वा समाधि जाणंति, समाधिर्नाम रागद्वेषपरित्यागः, स एवं समाधिमार्गावस्थित, 'णो काधिएँ होज्जा संजते' वृत्तं ॥१३८॥ कथयतीति कथकाः अक्खाणगाणि गोयरग्गगतो उवस्सयगतो वा अप्रतिमानानि कथयति कथिकः, पासणीओ णाम गिहीणं व्यवहारेषु पणियगादिसु वा प्राश्निको, न भवति, अपाया तत्थ जो जिवति तस्स अप्पियं भवति, संपसारको नाम संप्रसारकः, तद्यथा इमं वरिसं किं देवो वासिस्सति णवत्ति, किं भंडं अग्घिहिति वा न वा ?, उभयथापि दोषः, अधिकरणसंभवात्, अग्घिहिति णवत्ति, 'नचा धम्मं अणुत्तरं' एवंविधेन न भाव्यं, कतकिरिओ णाम कृतं परैः कर्म्म पुट्ठो अपुट्ठो वा भणति शोभनमशोभनं वा एवं कर्त्तव्यमासीत् नवेति वा, मामको णाम ममीकारं करोति देशे गामे कुले वा एगपुरिसे वा, किंच–अयं चान्यः कर्म्मविदालनोपायः, तद्यथा–'छण्णं च पसंस णो करे०' वृत्तं ॥१३९॥ द्रव्यच्छन्नं निधानादि भावच्छन्नं-माया, भृशं पसंसा–प्रार्थना लोभः उक्कोसो–मानः प्रकाशः–क्रोधः, स हि अन्तर्गतोऽपि नेत्रवक्त्रादिभिर्विकारैरुपलक्ष्यते, उक्तं हि–"कुद्धस्स खरा दिट्ठी" य एवं कषायनिग्रहोद्यताः तेसिं सुविवेकः गृहदारादिभ्यो विवेको बाह्योऽभ्यन्तरस्तु कषायविवेकः, आहितं–आख्यातं, सुविवेगोत्ति वा सुणिक्खंतं वा सुपव्वज्जत्ति वा एगट्ठं, भृशं नता प्रणताः, कुत्र नता ?, धर्म्मे वा 'सुज्झोसितं'ति जुषो प्रीतिसेवनयोः, धूयतेऽनेनेति धूतं–ज्ञानादि संयमो वा येषां सुज्झोसितं–स्वभ्यस्तं तेसिं सुविवेगमाहिते। स एवं विदालनामार्गमाश्रितः 'अणिहे सहिते सुसंवुडे०' वृत्तं ॥ १४० ॥ अनिहो नाम अनिहतः परीषहैस्तपःकर्म्मसु वा नात्मानं निंधयति, ज्ञानादिषु सम्यगाहितः णाणादीहि ३ आत्मनि वा हितः स्वहितः, अथवा यस्त्रिगुप्तः स समाहितो, धर्म्मेण यस्यार्थः स भवति धम्मट्ठी तवोवधाणवीरीय-

संयुक्तः तवे बारसविधे, स एवं गुणजुत्तो 'विहरेज्ज समाहितेंदिए' अनियतवासित्वं गृह्यते, समाहितो, निगृहीतेन्द्रियत्वं च, उक्तं हि—"सद्देसु य भद्दयपावएसु, सोतव्विसयं उवगतेसु । तुट्ठेण व रुट्ठेण व समणेण सया ण होयव्वं ॥१॥" एवं सेसिन्दियविसएसुवि, स्यात्—किमर्थं एवंविधः प्रयत्नः क्रियते अतिदुःखश्च ?, उच्यते, 'आतहितं दुक्खेण लब्भते' तंजहा—'माणुस्सखेत्त जाती' गाथा ॥ स्यात्—कथं अनादिमति संसारे अयमात्मा न पूर्वमेवानेन पथा प्रयात इति ?, उच्यते 'णहि णूण पुरा अणुस्सुतं०' वृत्तं ॥१४१॥ नेति प्रतिषेधे, हि पादपूरणे, नूनमनुमाने, पुरा इति क्रमात् अतिक्रान्तकालग्रहणं, अनुगतं श्रुतं अनुश्रुतं, किंच तत् ?, उच्यते, वक्ष्यते हि—मुणिणा सामाइयं पदं, अथवा मुणेत्तावि अवितहं णो अधिट्ठितं, अवितहं णाम यथावत्, अधिट्ठितं णाम करणे, तदिदं मुनिना सामाइयं पदं आख्यातं इत्यर्थः, समता सामाइयं, तच्च अनेकप्रकारं, कतरेण मुनिना तदाख्यातं ?, 'णातएण जगसव्वदंसिणा' जगे सव्वं पस्सति जगसव्वदंसी, 'एवं माता(मत्ता)महन्तरं०' वृत्तं ॥१४२॥ एवमधारणे, महन्तरं मत्वा-ज्ञात्वा, तत् कस्य कयोः केषां वा ?, उच्यते, सुत्तस्स य असुत्तस्स य, विरतीए अविरतीए, मोक्खसुहस्स संसारसुहस्स य सच्छासननयस्य मिथ्यादर्शनानां च, अथवा इमं धम्मं महत्तरं मत्वा कुप्रवचनेभ्यः, सहिता नाम ज्ञानादिभिः, बहवो जना इति अणंतातीतकाले सिद्धाः संपदं च, 'गुरुणो छंदाणुवत्तगा' गुरवः-तीर्थकरादयः छंदः-अभिप्रायः विरता भूत्वा विषयकषायेभ्यः तीर्णा भवौघं तरंति च, द्रव्यौघः समुद्रः भावौघस्तु संसारः, आहितमाख्यातं कथितमित्येकोऽर्थः इति वैतालीये द्वितीयोद्देशकः २—२ ॥

सूयणाधिकारे प्रस्तुते विदारणाधिकारोऽनुवर्त्तते, उक्तं हि—'उद्देसगंमि ततिए अण्णाणचियस्स अवचयो होहि । स च सुहसातस्स ण भवति, परीषहसहिष्णोर्भवति, स कथं ?, उच्यते 'संवुडकम्मस्स भिक्खुणो०' वृत्तं ॥१४३॥ संवृतानि यस्य प्राणव-

धादीनि कर्म्माणि स भवति संवुडकम्मा, इन्द्रियाणि वा यस्य संवृतानि स भवति संवृत्तः, निरुद्धानीत्यर्थः, यस्य वा यत्नवतः चंक्रमणादीनि कम्माणि संवृतानि, अथवा मिथ्यादर्शनाविरतिप्रमादकषाययोगा यस्य संवृता भवंति स संवृतकर्म्मा, भिक्खणसीलो भिक्खू, जमिति अणिद्दिट्ठस्स णिद्देसे, दुक्खमिति कम्मं, पुट्ठं णाम बद्धपुट्ठणिधत्तणिकाइतं, अबोधिए णाम अण्णाणेण धम्मं अबुज्झमाणेणं, यावन्न तात्र सुबुध्यते स तं संजमतो विवज्जति, तं पंचणालिविहाडिततडागदृष्टान्तेन, निरुद्धेसु च नालिकामुखेषु वातातापेनापि शुष्यते, ओसिंचमाणं च सिग्घतरं सुक्खति, एवं संयमेण निरुद्धाश्रवस्य पूर्वोपचितं कर्म्म क्षीयते, आह–तपः अभ्यन्तरं, एवं उक्तः, दशप्रकारेन्द्रियादिसंलीणता उक्ताः इंद्रियपडिसंलीनता जोगपडिसंलीणता कसायपडिसंलीणत्ता, संवृतात्मकस्तु अनशनावमौदर्यादितपोयुक्तस्य उत्सिच्यमानमिवोदकं क्षिप्रं कर्म्मापचीयते, सेलेसिं पडिवण्णो उक्कोसो संवुडो, मणुस्ससंतियं 'मरणं हेच्च वयंति पंडिता' मोक्खं, अथवा म्रियते येन तन्मरणं, तच्च कर्म्म संसारो वा, तं हित्वा व्रजंति मोक्षं तेनैव भवग्गहणेण व्रजंति तान् प्रतीत्यादिश्यते–'जे विण्णवणाहिं झूसिता' वृत्तं ॥१४४॥ विज्ञापयंति रतिकामा विज्ञाप्यन्ते वा मोहातुरैर्विज्ञापनाः–स्त्रियः, जुषी प्रीतिसेवनयोः, अजुषिता नाम अनाद्रियमाणा इत्यर्थः, विज्ञापनासु हि पंचापि विषयाः स्वाधीना शब्दादयः, उक्तं हि–'पुप्फफलाणं च रसं सुराएँ मंसस्स महिलियाणं च। जाणंता जे विरता ते दुक्करकारए वंदे ॥ १ ॥" संस्पृष्टा वा ताभिः, कौमारब्रह्मचारिणः ते 'संतिण्णेहि समं वियाहिता' सम्यक्तीर्णाः संवृतात्मानो भूत्वा संसारौघं तीर्णाः मोक्षं जिगमिषवोऽपि हि अतीर्णा अपि तीर्णा इव प्रत्यवसेयाः, विविधं आहिता वियाहिता 'तम्हा उड्ढंति पासध' तम्हादिति तस्मात्कारणात् यस्माद्विज्ञापनासु अजुषिता संतिण्णा हि समं वियाहिया, तीर्णमबन्धकत्वं च प्रति समाः, ऊर्द्धमिति मोक्षः तत्सुखं वा, तं

दृष्ट्वा कामभोगा द्रष्टव्या, एकार्बुदपरिश्रावणवत् व्रणालेपनवद्वा, पठ्यते च—'उड्ढं तिरियं अधे तधा' उड्ढं दिव्वा कामा अधे भवणवासिणं तिरियं तिरिक्खमणुस्सजोणिवाणमंतरा, ते तिविधेवि य दृष्ट्वा कामाणि रोगवत् अधिकं अत्यर्थं वा, यथा रोगा दुक्खावहा एवं कामा अपि, अट्ठविधकम्मरोगापत्तेः, सो भवति एवं, सेसावि आसवदाराणि जोएयव्वाणि, एयं संवुडत्तणं विरइं च कहं तरेज्ज ?, दिट्ठंतो 'अग्गं वणिएहि आणियं' वृत्तं ॥१४५॥ यदुत्तमं किंचित्तदग्गं, तद्यथा वर्णतः प्रकाशतः प्रभावतश्चेत्यादि, तच्च रत्नादि, तत्तु द्रव्यं वणिग्भिरानीतं राजानो धारयंति तत्प्रतिमा वा, तत्तु वस्त्रमाभरणादि वा, तथैव चाश्वो हस्ती स्त्री पुरुषो वा, यो वा यस्मिन् क्षेत्रे प्रधानं द्रव्यं धारयति, शब्दादिविषयोपगतः परिभुंक्त इत्यर्थः, राजस्थानीया जीवाः, जेहिं मिच्छत्तादि दोसे खवित्ता खयोवसममाणिता वा वारसविधा वा कसाया ते परमाणि महव्वतरयणाणि राईभोयणवेरमणछट्ठाणि राजान इवाग्राणि रत्नानि वणिग्भिरानीतानि धारयंतीति अग्रं प्राधान्यं, पूर्वदिग्निवासिनामाचार्याणामयमर्थः, अपरदिग्निवासिनस्त्वेवं कथयंति—ते जे विण्णवणाहिं अजोसिता संतिण्णेहि समं विहायिता तेन सव्वे एवायं लोकः महाव्रतानि प्रतिपद्यते, उच्यते, 'अग्गं वणियेहि आहितं', अग्गाणि—वराणि रयणाति वणिग्भिरानीतानि धारयंति शतसाहस्राण्यनर्घ्याणि वा राजान एव धारयंति, तत्तुल्या तत्प्रतिमा वा, कियन्तो लोकेऽस्ति वणिजः क्रायिका वा, एवं परमाणि महव्वयाणि रत्नभूतान्यतिदुर्द्धराणि तेषामल्पा एवोपदेष्टारो धारयितारश्च, 'जे इह सायाणुगा णरा' वृत्तं ॥१४६॥ जे इति अणिद्दिट्ठस्स णिद्देसे सायं अणुगच्छंतीति सायाणुगा—इहलोगपरलोगनिरवेक्खा, एवं इड्डिरससायागारवेसु 'अज्झोववण्णा' अधिकं उपपण्णाः अज्झोववण्णा तस्मिन्नेव सोतिंदियादिए इच्छामदणकामेसु वा मुच्छिता—गिद्धा गढिता अज्झोववण्णा, 'किमणेण समं पगब्भिता' ते हि अइयारेसु पसज्जमाणा यदा

परैश्चोद्यंते तदा ब्रुवते–किमनेन स्वल्पेण दोषेण भविष्यति ?, विनयं वा दुप्पडिलेहितदुब्भासितअणाउत्तगमणादि, एवं थोवे थोवं पावमायरंता पदे पदे विसीदमाणा सुबहून्यपि पापान्याचरति, उक्तं च–'करोत्यादौ तावत्सघृणहृदयः किंचिदशुभं०' दिट्ठंतो जहा एगस्स सुद्धे वत्थे पंको लग्गो, सो चिंतेति–किमेत्तियं करिस्सतित्ति, तत्थेवाज्झवसितं, एवं वितियं मसिखेलसिंघाणगसिणेहादीहिं सव्वं मइलीभूतं, अथवा मणिकोट्टिमे चेडरूवेण सण्णा वोसिरिता, सा तत्थेव घट्ठा, एवं खेलसिंघाणादीणिवि कताणि, किं करिस्संतित्ति तत्थेव तत्थेव घट्ठाणि जाव तं मणिकोट्टिमं सव्वं लेक्खादीहि–श्लेष्मादिभिः मलिनिभूतं दुग्गंधिगं च जातं, भद्दगमहिसोवि एत्थ दिट्ठंतो भाणितव्वो, आचंलक्खो राया दिट्ठंतो य, एवं पदे पदे विसीदंतो किमणेण दुब्भासितेण वा स्तोकत्वादस्य चरित्तपडस्स मलिणीभविस्सति जाव सव्वो चरित्तपडो मइलितो, अचिरेण कालेण चरित्तमणिकोट्टिमं वा 'णवि जाणंति समाहिमाहितं' ते हि णिच्छयणयतो अण्णाणिणो चेव लब्भंति, पदे पदे विसीदत्तणा जया साधम्मिएहिं परेहिं वा चोइता भवंति तदा 'वाहेण जहा व विच्छते' वृत्तं ॥ १४७ ॥ वाहो णाम लुद्धगो तेण सरेण तालितो मृगोऽन्यो वा स तेण ताव परद्धो यावत् श्रान्तश्चत्वारिवि पादे विन्यस्य व्यवस्थितः ततो मरणं चाप्तः, अयं तु सौत्रो दृष्टान्तः, वाहेण जहा वच्छते, वाहतीति वाहः—शाकटिकोऽन्यो वा 'यथे'ति येन प्रकारेण तेन वाहेन विषमतीर्थश्रान्तो वा अवहन् प्रतोदेन विविधं क्षतः, अबलो नाम क्षीणबलः, भरोद्वहनं श्रान्तो वा, गच्छतीति गौः, भृशं चोदितः, चोद्यमानोऽपि न शक्नोत्युद्वोढुं, जेण तस्य तहिं अप्पथामता 'तस्ये'ति तस्य गोः तस्मिन्निति पांसुनिकरे विषमे वा, अप्पथामया णाम जेण अवहंतो तात्तगप्पहारे सहति, जइ थामवं होन्तो तो ण तुत्तगप्पहारे सहंतो, सव्वत्थाप्यचयंतो खलु से तीक्ष्णैः प्रतोदाग्रैः तुद्यमानो अवसीदति, अथवा से 'अन्तए' अन्त्यायामप्यवस्थायां अन्तशः

'णातिचए' ण सकेति, अवसो विसीदति, एवं सोवि संयमादिनिरुद्यमः 'एवं कामेसणा विदू' वृत्तं ॥१४८॥ एवमवधारणे, उक्ता 'कामैषणा' कामकाममार्गणा, विदुरिति विद्वान्, कामविपाकं विदन्निह परत्र च कामपिशाचपीड्यमानश्चिन्तयति 'अज्ज सुए पयहामि संथवं' संथवो नाम पुव्वावरसंबंधो तं संथवं अद्य श्वः परश्वो वा प्रहास्यामि, स हि तं संथवं उत्सिसृक्षुरपि मुमुक्षुरपि कुटुम्बभरणादिदुःखैरेव हि विवक्षतो गौरिव न शक्नोति उत्सृष्टुं, अथवोपदेश एवायं—'एवं कामेसणं विदू' वृत्तं, एवमनेन प्रकारेण काम्यन्त इति कामाः, एषणा मार्गणैव, विदुरिति विद्वान्, नाविद्वान्, कुटुम्बभरणे दुस्त्यजान् मत्वा तत्र वा शक्नोति गौरिवावहन् तुद्यते कृषिपशुपाल्यादिषु च कर्म्मसु वर्त्तमानो बाध्यते, एवं बह्वपायान् कामान् मत्वा अज्ज वा सुते वा संथवं श्रुत्वा च संथवं 'कामी कामे ण कामए' कमणीयाः काम्यंते वा कामाः इब्भेसुवि जहा पण्डुमधुरुत्तरमधुराइ भाया संयोगविप्पयोगा, णिमंतिज्जमाणो वा जहा—कण्णाए य धणेण य णिमंतियो जोव्वणंमि गहवतिणा। णेच्छति विणीतविणयो तं वइररिसिं णमंसामि ॥१॥ अलद्धे—असंते पत्थेति उवज्जिणित्ता भुंजीहामि 'कण्हुइ'त्ति क्वचित् ग्रामे वा पुरे वा, अथवा हीणोत्तममध्यमे उपदेशः क्रियते तेसु तेसु पमत्तस्स 'मा पच्छ असाधुता भवे' वृत्तं ॥१४९॥ मा सेति इयं असाधुता, लप्स्यते नाम हिंसादिकर्म्मप्रवृत्तिः मरणकाले तप्स्यते, परत्र वा, उक्तं हि—"जहा सागडिओ जाणं, सम्मं हेच्चा महापहं। विसमं मग्गमोतिण्णो, अक्खे भग्गंमि सोयते ॥ १ ॥ सोयए चेव बहुं, अपत्थं आमकं भोच्चा, राया रज्जं तु हारए।" एवं ज्ञात्वा 'अच्चेही अणुसास अप्पगं' अतीव अतीहि-अत्यन्तं क्रम इत्यर्थः, कुतः?—प्रमादात्, आत्मानमेवात्मना अनुशास्ति, किंच 'अधियं च असाधु सोयती' जधा असाधुता तहा तहाऽधिगं सोयति, इहापि ताव चोराती असाधूणि कम्माणि काउं गहिता सोयंति, किमु परत्र?, स्तनंति च शरीरादिभिर्दुःखैर्बाध्यमानाः, शोचनं

मानसस्तापः, निस्तननं तु वाचिकं किंचि, कायिकं च, सर्वतस्तप्यते परितस्तप्यते बहिरंतश्च, कायवाङ्मनोभिर्वा बहुंति—अपरिमाणं पंकोसण्णनागवत्, किं च 'इह जीवितमेव पस्सधा' वृत्तं ॥ ९५० ॥ 'इहे'ति इह मानुष्ये जीवति येन तत् जीवितं, एवमवधारणे, तरुणगो णाम असंपूर्णवया वा अन्यो वा कश्चित्, पठ्यते च दुर्बलं वा, वाससयं परमायुः ततो 'तिउट्टति' छिद्यते प्रत्यपायबहुलात्, वक्ष्यति हि—गब्भयमितिजंतित्ति गब्भया, 'इत्तरवासं च बुज्झधा' इत्तरमिति—अल्पकालमित्यर्थः, तं बुध्यत—अवगच्छत, एवमल्पेऽप्यायुपि बज्झपाये वा, तथापि नाम गृद्धा नरा कामेसु चिप्पित आक्रान्ता, न पुनरुत्तिष्ठंति तदुल्लंघनाय, किंच 'जे इह आरंभणिस्सिता' वृत्तं ॥ १५१ ॥ जे इति अणिद्दिट्ठणिद्देसे, इहेति इह मनुष्यलोके, पापंडिनोऽपी भूत्वा शाक्यादयः आरंभे हिंसादि तण्णिस्सिता परदंडप्रवृत्ता आत्मानमपि दंडयंति, अथवा ण तेसिं इमो लोगो न परलोगो, तेनात्मानं दण्डयंति, 'एगंतलूसगा' एगन्तहिंसगा इत्यर्थः, येऽपि स्वयं न घातयन्ति तेऽपि उद्दिश्यकृतभोजित्वाद्वधनमनुमन्यन्ते, एवंविधा 'गंता ते पावलोगयं' गंतारो नाम गमिष्यन्ति, पापानि पापो वा लोगः नरकः, 'चिरकालं'ति बहूणि पलिओवगसागरोवमाणि, आसुरिका दव्वे भावे य, आसुरियाणि न तत्थ सूरो विद्यते, अथवा एगिंदियाणं णत्थि जाव तेइंदिया असूरा वा भवंति, दिसन्ति दिश्यत इति दिग् दिग्गहणादष्टादशप्रकारा भावदिक्, एवं गिहिणो विव इत्थं आरंभणिस्सिता आतदंडा एगंतलूसगा ते, न खंतिया, 'ण य संखयमाहु जीवितं' वृत्तं ॥१५२॥ असंस्करणीयं असंस्कृतं, उक्तं हि—'दंडकलितं करेन्ता वचंति हु राइणो य दिवसा य। आसुं संवेल्लेन्ता गता य ण पुणो णियत्तिन्ति ॥ १ ॥ तहवि य णाम बालजणो हिंसादिषु पापकर्म्मसु प्रवर्त्तमानः प्रगल्भीभवति धृष्टीभवतीत्यर्थः, यदापि च पापकर्म्माण्याचरन् परेणोच्यते—किं परलोगस्स ण बीभेसि?, ततो भणति—'पच्चुप्पण्णेण का-

जीविताल्पत्वादि

रितं, को दद्दुं परलोगमागते ?' प्रत्युत्पन्नेनैव सौख्येन कार्यं, को हि दृष्ट्वा स्वर्गं मोक्षं वा तत्सुखं वा परलोकादायातः ?, कथं वा साक्षाददृश्यमानः परलोकोऽस्तीत्यध्यवसेयः, उच्यते—'अदक्खुव दक्खु आहितं' वृत्तं ॥ १५३ ॥ न पश्यतीति अदक्खु अदक्खुणा तुल्यं अदक्खुवत्, दक्खू णाम द्रष्टा, दक्खूणा व्याहृतं दक्षुव्राहितं श्रद्धस्व, हे अदक्खुदंसणो !, योऽपि कार्याकार्यानभिज्ञो सोऽपि अंध एव, न दक्खुदर्शनी, 'हन्हि हि खु निरुद्धदंसणे' हंदीति संप्रेषणे, हि पादपूरणे, दृश्यते येन तद्दर्शनं, निरुद्धं दर्शनं यस्य स भवति निरुद्धदर्शनः, तत्केन ?, मोहनीयेन कर्म्मणा निरुद्धं, मिच्छादिट्ठी, एवं चारित्रनिरोधेन चरित्ते अचरित्ते वा भावना, निरुद्धं तव ज्ञानं-सन्निकृष्टं, केन ज्ञास्यसि परलोकं ?, अथवा निरुद्धमिति ज्ञानं तं, न चक्षुर्दर्शनं, तत्कथं परलोकं द्रक्ष्यतीति, आत्मादीनि वाऽचाक्षुषाणि, 'दुक्खी मोहो पुणो पुणो' वृत्तं ॥ १५४ ॥ दुःखमस्यास्तीति दुःखी तैस्तैर्दुःखैः पीड्यमानः पुनः मोहमुपार्जयति, मुज्झति जेण मोहिज्जति वा स मोहः कर्म्मेत्यर्थः, संसारमनुपरीति, यतश्चैवं ततो 'निर्विंदेज्ज सिलोगपूयणं' सिलोगो नाम श्लाघा यशःकामता, पूजा आहारादिभिः, दोण्णिवि णिव्विन्देज्ज—गरहेज्ज, सक्कारपुरक्कारौ न प्रार्थयेदयमर्थः,'एवं सहिते धिपासिया' एवमनेन प्रकारेण, सहितो नाम ज्ञानादिभिः, अधियं पस्सिया आयतुले पाणेहि भविज्जसित्ति, यदात्मनो नेच्छसि तत्परेपामिति, योऽपि तावत् 'गारंपिअ आवसे णरे' वृत्तं ॥ १५५ ॥ आगारत्वं, अपिशब्दार्थः सम्भावने, किमुतानगारत्वं, आवसतीत्यावसे, अनुपूर्वं नाम पूर्वं श्रवणं ततो ज्ञानविज्ञाने संयमासंयमश्च, इह तु संयमासंयमो अधिकृतः दुवालसविधं सावगधम्मं फासितो 'समया सव्वत्थ सुव्वते' समभावः समता तां समतां सव्वत्थ भावममता, कडसामाइए हि सव्वत्थ समतां भावयति, तदनु चाकृतसामायिकः, शोभनव्रतः सुव्रतः, 'देवाणं गच्छे सलोगतां' समानलोगतं सलोगतं,

विविक्तववंभचेरदेवाणं सलोगतं, किं पुण जो महव्वयाइं फासेति ?, यतश्चैवं श्रावका अपि देवलोकं गच्छंति जिनेन्द्रवचनानुशास्ताः, तेण 'सोचा भगवानुशासनं' वृत्तं ॥१५६॥ अनुशास्यते येन तदनुशासनं श्रुतज्ञानमित्यर्थः, अथवा अनुशासनस्य–श्रावकधर्मस्य फले 'सच्चे तत्थ करे उवक्कमं' सत्ये–अवितथे सद्भुचो वा हितं सत्यं सत्यवचनं नानृतं संयमो वा, तत्र कुर्यादुपक्रमं, उपक्रमो नाम यथोपदेशः, अथवा सत्यमिति सत्यं, तत्थ करेज्ज उवक्कमंति, न वितथं, 'सव्वत्थ विणीतमच्छरे' सर्वत्रेति सर्वार्थेषु येन विनीतो मत्सरः स भवति विनीतमत्सरः, मत्थरो नामाभिमानपुरस्सरो रोषः, स चतुर्द्धा भवति, तंजहा–खेत्तं पडुच्च वत्थुं पडुच्च उवधिं पडुच्च सरीरं पडुच, एतेसु सव्वेसु उप्पत्तिकारणेसु विनीतमत्सरेण भवितव्वं, तत्थ जातिलाभतपोविज्ञानादिसंपन्ने च परे न मत्सरः कार्यः यथाऽयमेभिर्गुणैर्युक्तोऽहं नेति, तद्गुणसमाने च, दव्वुंछं उक्खलखलगादि भावुंछं अज्ञातचर्या, विशुद्धं नाम उग्गममादीहि कल्पितं 'आहरे' आदद्यात्, एवं 'सव्वं णचा अहिट्ठए धम्मं' वृत्तं ॥१५७॥ सर्वं ज्ञेयं यावत् शक्तिर्विद्यते तावदध्येयं, ज्ञात्वा च अकृत्यं न कर्त्तव्यं, कृत्यमाचरितव्यमिति, उक्तं हि–"ज्ञानागमस्य हि फलं०"अधिट्ठए धम्मं, णाणादीणि वा, धम्मेण जस्स अत्थो स भवति धम्मट्ठी, तपोपधानवीर्यवान्, 'गुत्ते जुत्ते सदाजते'त्ति त्रिगुप्तः, जुत्तो णाम णाणादीहिं तवसंजमेसु वा सदा–नित्यकालं जतेत यत्नवात् स्यात्, कुत्र यतेत ?, तदिदमात्मपरे, आत्मनि परे च आतपरे, णो अत्ताणं अतिवातेज्ज णो परं अतिवातेज्जिति, आत्मनः परं आतमेसु वा परं, किं तं ?, आयतार्थिकत्वं, अत्थो णाम णाणादि, आयतो णाम दृढग्राहः, आयतविहारकमित्यर्थः, 'वित्तं पसवो य णातयो' वृत्तं ॥ १५८ ॥ वित्तं–हिरण्णादि पसवो–गोमहिसाजाविगादि णातयो–मातापितासंबंधिणो, बालजणो सरणंति मण्णती, एतान् बालजनः शरणं मन्यते, एते हि मां दुःखा-

त्परित्रास्यंति इह परत्र च, तं च न भवति, कथं ?, इह तावत्—सयणस्सवि मज्झगतो रोगाभिहओ किलिस्सए एगो । सयणोवि य से रोगं ण विरिंचिति णेव णासेति ॥१॥ सव्वणयहेतुसिद्धं अप्पाणं जाण णिच्छएणेक्कं' यथा ते मम न त्राणाय तथाऽहमपि न तेषां त्राणाय शरणं च, इतश्च न भवति शरणं, यतः 'अब्भागमियंसि वा दुहे' वृत्तं ॥ १५९ ॥ अभिमुखं आगामिकं अब्भागमिगं—व्याधिविकारः, स तु धातुक्षोभादागंतुको वा, उपक्रमाज्ञातमित्युपक्रमिकं, अनानुपूर्व्या इत्यर्थः, निरुपक्रमायुः करणं, भवंतो नाम भवान्ते मरणमेव, का भावना ?, तद्धि यद्बालमरणं न भवति, जराकामाद्युपक्रमतो वा फलप्रपातवत्, तस्यैवंविधमृतस्य 'एगस्स गती च आगती' एकस्येति पशुज्ञातिहीनस्य, एवं विदुः मत्वा न तां वित्तपशुनार्तिं च शरणं मन्यते, 'सव्वे सयकम्मकप्पिया' वृत्तं ॥ १६० ॥ सर्वे इत्यपरिशेषाः, स्वैः कर्मभिः कल्पिताः प्रविभक्तविशेषा इत्यर्थः, तद्यथा-पृथिविकायिकत्वेन०, कृती च्छेदने, न विकृतं अच्छिन्नमित्यर्थः, अवियत्तेन वा अधिगच्छंतेनेत्यर्थः, 'दुहिणे'त्ति दुःखिनः प्राणिनो जीवा 'हिंडंति भयाकुला सढा' भयैः आकुला भयाकुला, भयानि सप्त, भयानि वा दुःखं, तेणाकुलाः, सढा नाम तपश्चरणे निरुद्यमाः शठीभूता वा, पापकर्म्मभिः ओतप्रोता इत्यर्थः, 'वाहिजरामरणेहिं भिदुता' नारकतिर्यग्मनुष्येषु व्याधिः जरा तिर्यङ्मनुष्येषु मरणं चतसृष्वपि गतिषु, 'इणमो खणं वियाणिया' वृत्तं ॥ १६१ ॥ 'इणमो'त्ति इदं क्षीयत इति क्षणः, सतु सम्मत्तसामाइयादिचतुर्विधस्यापि, एक्केकः स चतुर्विधो खणो भवति, तंजहा—खेत्तखणो कालखणो कम्मखणो रिक्खखणो, एते चत्तारिवि जहा लोगविजए पढमे उद्देसए 'खणं जाणाहि पंडिए'त्ति सुत्ते भणिता तथा भणितव्वा, विविधं जाणिया विजाणिया, 'णो सुलभं बोधी य आहितं' बोधी णाणाति तिविधो आहितमारव्यातं, उक्तं च-"लद्धेल्लियं च बोधिं अकरेंतोऽणागयं च पत्थंतो । अण्णं दाइ बोधिं लब्भिसि कयरेण मोल्लेणं ?॥१॥"

विराहितसामण्णस्स हि दुल्लभा बोधी भवति, अवड्ढं पोग्गलपरियट्टं उक्कोसेणं हिंडति, 'एवं सहितेहि पस्सिया' एवं मत्वेति वाक्यशेषः, णाणातीसहितो अधिया(वा)सए परीसहे, पठ्यते च 'एवं सहिते अधिया(वा)सए' अधिया वासए अधिवासए, यदुक्तमेवमेतत्, क एवमाह—'आह जिणे इणमेव सेसगा' रिसभसामी भगवं अट्ठावए पुत्तसंबोहणत्थं एवमाह इदमेव, जे वाऽजिताद्याः शेषका जिनाः ते प्राहुः, किमतिक्रान्ता अनागताश्चैव जिनाः कथितवन्तः कथयिष्यंति च?, ओमित्युच्यते 'अभविंसु पुरापि भिक्खवो' वृत्तं ॥ १६२ ॥ अभविष्यन्नतिकान्ताः भिक्षव इति आमन्त्रणं, 'आएसावि भविंसु सुव्वता' आदेशा इति आगमेस्सा 'एताइं गुणाइं आहिते' एते ये उक्ता इहाध्ययने अप्रमादादिगुणा सिद्धिगमणसफला काश्यपो उसभस्वामी वद्धमाणस्वामी वा अनुगतो अनुकूलो वा अनुलोमो वा अनुरूपो वा धर्म्मः अनुधर्म्मः काश्यपस्यानुचरणशीलाः, द्विधा समासः क्रियते-कासवो जं अणुधम्मं चरति जो वा कासवस्स अणुधम्मं चरंति ते च गुणा उक्ताः, पुणरपि चोच्यन्ते—'तिविधेणवि पाण मा हणा' वृत्तं ॥ १६२ ॥ त्रिविधेन योगत्रयकरणत्रयेण, प्राणाः आयुःबलेन्द्रियाः प्राणाः ते मा हण आत्मनोऽहितं, अणिदाणो ण दिव्वमाणुस्सएसु कामभोगेसु आसंसापयोगं करेति, इंद्रियणोइन्द्रिएसु संवुडो, 'एवं सिद्धा अणंतगा' एतं मग्गं अणुपालित्ता अतीतकाले अणंता सिद्धा, संपतं संखेज्जा सिज्झंति, अणागते अणंता सिज्झिस्संति, अवरे नाम ये वर्त्तमाना आगमिष्याश्चेति, 'एवं से उआहु अणुत्तरणाणी अणुत्तरदंसी ॥ १६४ ॥ एवमवधारणे 'स' इति सो उसभसामी अट्ठाणउतीए सुताणं 'आह' कथितवान्, अणुत्तरणाणी अणुत्तरदंसी अणुत्तरणाणदंसणधरो, एतेण एकत्वं णाणदंसणाणं ख्यापितं भवति, 'अरहा णायपुत्ते' पूजादीनर्हतीत्यर्हन् नास्य रहस्यं विद्यते वा अरहा ज्ञातस्य पुत्रः, णातकुलपसूते सिद्धत्थखत्तियसुते भगवान्—ऐश्वर्यादियुक्तः, 'वैसाली-

ए'त्ति गुणा अस्य विशाला इति वैशालीयः, विशालं शासनं वा इक्ष्वाकुवंशे भवो वैशालीयः, 'विशाला जननी यस्य, विशालं कुलमेव वा। विशालं [प्र]वचनं चास्य, तेन वैशालिको जिनः ॥१॥ 'वियाहितो' व्याख्यातः, इति-एवं जंबूस्वामिनः वृद्धभगवानार्यसुधर्मा कथयति-एवं से उदाहु जाव वियाहितो, 'इतिः' परिसमाप्तौ, अथवा एवमर्थः, एवं इति बेमि, सुधम्मसामिस्स वयणमिदं, भगवता सर्वविदा उवदिट्ठं अहमवि बेमि, नयाः पूर्ववत् ॥ इति वैतालीयाख्यं द्वितीयमध्ययनं समाप्तं ॥

इदाणीं उवसग्गपरिण्णत्ति अज्झयणं, तस्सवि चत्तारि अणुयोगदारा परूवेयव्वा, अधियारो दुविधो-अज्झयणत्थाहियारो उद्देसत्थाधियारो य, अज्झयणत्थाधियारो सव्वे उवसग्गा जाणित्ता सम्मं अधियासेतव्वा, उद्देसत्थाधियारो 'पढमंमि य पडिलोमा०' गाथा ॥ ४९ ॥ पढमे उद्देसए पडिलोमा जहा पुट्ठे दंसमसएहिं तणफासमचइता आयपरतदुभयसमत्था उवसग्गा भण्णंति, बितिए तु मायादि अणुलोमा उवसग्गा अण्णे य रायमादी पाएण अणुलोमे उवसग्गे उप्पायंति, ततिए उद्देसए अज्झत्थविसेसोवदंसणं भणिहिति, के जाणंति विउवातं? इत्थीओ उदयाओ वा, परवादी वयणं संबुद्धा समकप्पाओ अण्णमण्णेहि मुच्छिता परसमयिका परतित्थियभाविता य उवसग्गा उप्पाएन्ति, 'हेउसरिसेहिं' गाथा ॥५०॥ चउत्थुद्देसए हेतुसरिसा अहेतू भणिहिति, जहा मंथवई णाम सीलक्खलितकुतित्थिया एवं परूविन्ति हेत्वाभासादि, अहेतवो भूत्वा हेतुमिवात्मानमाभासयंति हेत्वाभासस्स 'समयपडितेहिं' ससमयजोगेहिं, जो तेसिं समया जुज्झमाणया णिउणा भणिता, अथ आयरिओ ससमयपडितेहिं णिउणेहिं दिट्ठंतेहिं तेसिं सीलखलियताणं अण्णउत्थियाणं पण्णवणं करेति चउत्थे, एवं दुविधोऽवि अत्थाहियारो भणितो। इदाणिं णामणिप्फण्णो णिक्खेवो, तत्थ गाथा 'उवसग्गंमि य छक्कं०' गाथा ॥ ४५॥ णामठवणाओ तहेव, वइरित्तो दव्वोवसग्गो दुविधो-चेतनदव्वोवसग्गो य

अचेतनदव्वोवसग्गो चेतनदव्विगं जं तिरिक्खमणुआ णियगसरीरावयवेण आहणंति, अचेतणदव्विगं तं चेव लउडादीहिं, अथवा अभिघातो तडिमादि उवरिं पडति, अथवा उवसग्गो दुविधो-आगंतुगो पीलाकरो य, आगंतुगो चउप्पदलउडादीहिं, वातियपेत्तियादि, खेत्तोवसग्गो 'जं खेत्तं बहु ओघभवं' गाथा ॥४६॥ ओघो बहुगं उप्पण्णं बहूपसग्गो, जहा बहुउवसग्गो लाढाविसयो, जहिं भट्टारगो पविट्ठो आसि छउमत्थकाले सुणगादीहि तत्थ णिद्धम्मा खवेंति, ओहभयं भवति जहा भरहवासे, कालोवसग्गो एगंतदूसमा, सीतकाले वा सीतपरीसहो वा णिदाघउसिसिणकाले उणपरीसहो वा, एवमादि कालोवसग्गो भवति, भावोवसग्गो कम्मोदयो, सो पुण दुविधो-ओहतो उवक्कमतो वा, ओहतो जहा णाणावरणं दंसणमोहणीयं असुभणामं णियागोत्तं अन्तरायिकं कम्मोदयितं, उवक्कमियं जं वेदणिज्जं कम्मं उदिज्जति। 'दंडकससत्थरज्जू' गाथा 'उवक्कमिए संजमविग्घकारए०' गाथा ॥४७॥ जे संजमा उवक्कामेन्ति उवसग्गा तेहिं अहिगारो, जेण वा दव्वेहि वा तं कम्मं उदीरिज्जति, जेण संजमाओ उवक्कमाविज्जति तेणावि अधियारो, ते चउव्विधा-दिव्वा तिरिक्खजोणिया माणुस्सा आयसंवेतणिया, दिव्वा चउव्विधा-हासा पदोसा वीमंसा पुढोवेमाता, मणुस्सावि चउव्विधा-हासा पदोसा वीमंसा कुसीलपडिसेवणता, तिरिया चउव्विधा-भया पदोसा आहारा अवच्चलेणसारक्खणता, आयसंवेतनीया चउव्विधा-घट्टणता लेसणता थंभणता पवडणता, अथवा वातिता पेत्तिया संभिया सन्निवाइया, एवं 'एक्केक्को चउव्विहो०' गाथा ॥४८॥ अट्ठविहो कहं होति ?, एक्केक्को अणुलोमो पडिलोमो य, अथवा सव्वेऽवि सोलसविधा उवसग्गा, चत्तारि चउक्कगा सोलस भवंति, एवं उवसग्गा जाणितव्वा जाणणापरिण्णाए, पच्चक्खाणपरिण्णाए अधिआसेतव्वा, परिहरंतेण तहा-तहा घडितव्वं परक्कमियव्वं जहा परीसहा णिज्जेज्जंति। गतो णामणिप्फण्णो। सुत्ताणुगमे सुत्तमुच्चारेयव्वं,'सूरं

मण्णाति अप्पाणं०'सिलोगो ॥१६५॥ कश्चित्संग्रामे उपस्थितो स्वाभिप्रायेण शूरमित्यात्मानं मन्यमानो वाग्भिर्विस्फूर्जन्नुपतिष्ठति जाव जेयं ण पस्सति, जियति जिनाति वा, गर्जते कलभस्तावद्, घनमाश्रित्य निर्भयः। गुहान्तरविनिष्क्रान्तं, यावत्सिंहं न पश्यति ॥१॥ तावद्गजः प्रश्रुतदानगंडः, करोत्यकालांबुदगर्जितानि। यावन्न सिंहस्य गुहास्थलीषु, लाङ्गूलविस्फोटरवं शृणोति ॥२॥ णिदरिसणं 'जुज्झंतं दढं धनुर्यस्य स भवति दृढधन्वा तं 'सिसुपालो व महारधं' मधारथो—केसवो शिशुपालेन तुल्यं शिशुपालवत्, स किल माद्रीसुतः चतुर्भुजो जातः, भीतया पश्चात् तया नैमत्ती पृष्टः—किमिदं रूवं ?, तेनापदिश्यते—महाद्भुतमेतत्, यं दृष्ट्वाऽस्य एतौ द्वौ भुजौ स्वाभाविकौ भविष्यतः ततोऽस्य मृत्युरिति, ततः सा माद्री दारकजन्मवर्द्धापकानामागतानां तं दारकं दर्शयति स्म, यथार्हं च पादेष्वपातयत्, वासुदेवस्य चागतस्य तमालोक्य तौ भुजौ नष्टौ, पश्चात्तस्य मात्रा वासुदेवोऽभयं याचितः, तेनापदिश्यते—अपराधशतमस्य क्षमयिष्यामि, ततोऽसौ प्रवृद्धं वासुदेवं समक्षं परोक्षं वा गोपालवत्सपालादिभिराक्रोशैराकुष्टवान्, आज्ञाप्रतिषेधादींश्चाँपराधान् कृतवान्, ततोऽपराधशते पूर्णे क्वचिदेव अभिमुखमापतंतं आक्रोशंतं मत्पथोऽसर्पस्व इति, नाहमपथा गच्छामि, अल्पेनैवायासेन चक्रभुक् सुदर्शनं चक्रधारातिपातेन शिरश्छिन्नं कृतवानिति परोक्षो दृष्टान्तः, अयं तु प्रत्यक्षः 'पयाता सूरा रणसीसे०' वृत्तं ॥१६६॥ भृशं याताः प्रयाताः, शयति शय्यते वा शूरः, महत उकिट्ठिसीहणातबोलकलकलसद्देणं प्रयाताः, रणसीसं णाम अग्गाणीकं, समस्तं ग्रास्यते ग्रस्यन्ते वा तस्मिन्निति संग्रामः, उपस्थितो णाम अन्योऽन्यबलेषु संग्रामायोपस्थितेषु, माता पुत्तं ण याणाति, अमातापुत्री यदा संग्रामो भवति, का भावना ?, तस्यामवस्थायां माता पुत्रं मुक्तं उत्तानशयं क्षीरहारमजंगमं भयोद्भ्रान्तलोचना अचादण्णा ण याणाति—नापेक्षते, न त्राणायोद्यमते, हस्तात्कटीतो वा भ्रस्यमानं भ्रष्टं वा

वा न जानीते 'जेतेण परिविच्छिते' जयतीति जेता अतस्तेन जेत्रा, तेण जयएण, परि सव्वतो भावे समंता बाणादिभिरायुधैस्तैः कृतः परिविच्छिते, सव्वतो छिण्णमित्यर्थः,'एवं सेहेवि अप्पुट्ठे' सिलोगो ॥१६७॥ अपुट्ठो णाम अप्पुट्ठधम्मो, अस्पृष्टो वा परीषहैः, अदृष्टधर्मा इत्यर्थः, भिक्खूणं चरिया भिक्खुचरिया, कोविदो विपश्चित् न कोविदो अकोविदो, न तावत्परिषहोपसर्गैः विकोविदः, सो पव्वयंतो चिंतेइ भणति य–किं पव्वज्जाए दुकरं काउंति ?, किं णिच्छियस्स दुकरं ?, णणु सीहवग्घेहिंवि समं जुज्झिज्जति, संगामे य पविसिज्जति, अग्गिपडणं च कीरइ, एवं अदिट्ठपरीसहो सूरं मण्णति अप्पाणं तपःशूरं, जहा दव्वसंगामे कुंतासिबाणगहणेसु, युद्धे उवट्ठिते केइ परबलसद्दं सोऊण चेव णस्संति, केइ प्रवृत्ते प्रहताः अप्रहता वा, केइ मारिज्जंति, एवं भावसंग्रामेऽवि सूरं मण्णति अप्पाणं जाव लूहं ण सेवएत्ति, रूक्षः–संजम एव, रूक्षत्वात् तत्र कर्म्माणि न श्लिष्यंति, रूक्षपटे रजोवत्, तत्र केचित् दृष्ट्वैव साधून् जल्लादीहिं लिप्ताङ्गान् केचिदर्द्धकृते लोचे केचित्परिसमाप्ते केशान् उत्स्रष्टुं गतास्तत एव यांति, उक्ता ओघउपसर्गाः। इदाणिं विभागशः उपदिश्यन्ते, तत्थोवसग्गा परीसहा य एगं चेव काउं उवदिस्संति 'जदा हेमंतमासम्मि' सिलोगो ॥ १६८ ॥ यत्रातीव शीतं भवति वर्षवर्द्दलादयो वा तीव्रवाता भवंति, वातग्रहणात् सीघवग्घविरालोपाख्यानं, यथा पोसे वा माहे वा 'तत्थ मंदा विसीदंति' तस्मिन् काले तत्र मंदा उक्ताः, विविधं सीदंति विसीदंति, अहो इमा सुदुकरा पव्वज्जा, वहवो परीसहोवसग्गा विसधितव्वा,' ते एवं चिंतेंता सीयाभिभूया 'रज्जहीणा व खत्तिया' जहा परबलेण उच्छादिते रज्जे हितसारे य परबलकंते विलुप्यमाने वा, खत्तिओ णाम राया, सो जहा सोयति, एवं सेहोऽवि णिरग्गिगे रण्णे गुत्तावगुत्तावसधीसु सीताभिद्दुतो विचिंतेति–किमेवंविधाए पव्वज्जाए गहियाए ?, भणितो सीतपरीसहो, एप एवोपसर्गः, तत्पुरुषोऽयं

समासः। तदिदाणीं उण्हपरीसहोऽपदिस्सति 'पुट्ठो गिम्हाभितावेणं' सिलोगो ॥ १६९ ॥ अभिमुखं तापयतीति अभितापः, अशोभनमनाः विमनाः कर्प्पूरत्रासितोदगं कंधराधरादि वा चिंतेंतो, अथवा तपं प्रति विगतं मनोऽस्य स भवति विगतमनाः, पातु-मिच्छा पिपासा, सुट्ठु पिवासितो 'मच्छा अप्पोदए जहा' तदल्पत्वादतीव तप्यन्ते बहिरुदकतापेन अंतश्च मनस्तापेन तप्य-मानाः यथा सीदन्ति एवमसावपि जलमलस्वेदक्लिन्नगात्रो बहिरुष्णाभितप्तः शीतलान् जलाश्रयाद्यान् धारागृहाणि चन्दनादी-श्चोष्णप्रतीकारान् अनुसरन् भृशं अनुशोचते व्याकुलचेता भवति, वुत्तो उण्हपरीसहो। इदाणिं जातणापरीसहो–'सदा दत्तेसणा दुक्खं' सिलोगो ॥ १७० ॥ सदेति सव्वकालमविश्रामेन दत्तग्रहणात् जातितं दत्तं च, जाइयदत्तमप्येसणीयं च, दुक्खं खुधाति-साभिभूतेहिं तं परिहरितुं, दुक्खं च पडिसेहिज्जति अणेसणिज्जं, साम्प्रतसुखाभिलाषी पडुप्पण्णभारिओ जीवो दिंतगा य रूसंति 'जायणा दुप्पणोलिया' दुःखं प्रणुद्यते जायणा बलदेववत्, वत्तारो य भवंति–कम्मत्ता दुब्भगा चेव० कृषीपशुपाल्यादिभिः कर्म्मान्तरैरार्त्ता अभिभूता इत्यर्थः, स्त्रीमित्रज्ञातिस्वामिनां दुब्भगा इति, आहुः पृथक् पृथक् जनो विस्तरा वा जनाः पृथग्जनाः, 'एते सद्दे अचाअंता' सिलोगो ॥१७१॥ शब्द्यते अनेनेति शब्दः, अचाएंता णाम अशक्नुवन्तः सोढुं, क्वोदीर्यन्ते ?, उच्यते, 'गामेसु नगरेसु वा' वा खेडविकल्पे कब्बडादीसुवि, 'तत्थ मंदा विसीदंति संगामंमि व भीरुणो' भीरवो हि संग्रामे प्राप्ते मरणभयाद्विषीदंति, ऊरू खंभाइज्जंति, खिन्नचित्ता भवंति, 'अप्पेगे खुज्झि(ज्झिते)भिक्खू' सिलोगो ॥१७२॥ अपि एके, न सव्वे, खुज्झितो णाम क्षुधितः पिपासुर्वा, तं क्षुत्तृष्णाप्रतियोगार्थमटंतं 'सुणी दंसती'ति सुणी लूषयतीति लूषकः भक्षक इत्यर्थः, 'तत्थ मंदा विसीदंति' संयमोद्यमं प्रति सीदंति, दिट्ठंतो 'तेऊपुट्ठा व पाणिणो' तेजोनाम अग्निस्तेन दवाग्निना

अन्यतमेन वा तेजसा शशमूषकमार्जारकोलवृकक्षुपकलतावितानवृक्षादयो दह्यमानाः संकुचंति, प्राणिनोऽपि दहमाना विसीदंति। 'अप्पेगे पडिभासंति' सिलोगो ॥१७३॥ समन्ताद्भाषन्ते परिभाषन्ते, पथ्यतेऽनेनेति पंथाः पन्थानं प्रति योऽन्यः पन्थाः स प्रतिपथः प्रतिपन्था वा तेन गच्छतीति प्रातिपथिकः तं, गामानुगामं रीयंतं केइ पाडिपंथगाः पडिभासंति, अथवा यो यस्य विलोमकः स तस्य प्रातिपथिको भवति, ते, न तु सर्वे एव, कुतीर्था–सन्मार्गविलोपकाः, कथं ?, अणुसोयपट्ठिए बहुजणंमि, साधवो हि प्रतिश्रोतसा मोक्षमभि प्रस्थिताः, कुतीर्थास्त्वनुश्रोतसा, किं भाषंते–'पडियारगया एते' करणं कृतिर्वा कारः कारं प्रति योऽन्यः कारः प्रतिकारस्तं गताः पडियारगताः, पडियाइं कम्माइं वेदंति, एते हि अण्णाए जातीए पंथा उच्छूढा तेण णिइणा हिंडति, ण य दत्ताइं दाणाइं तेन न लभंति, लद्धेऽपि य ण गेण्हंति, ण चोदगाणि दत्ताणि तेण ताणि ण पिवंति, 'जे एते एव जीविणो'त्ति जे एतेवं जीवणसीला, तंजहा कंजिगउसिणोदगादीहिं अन्ताहारेण जीवंति, पठ्यते च–'तद्दारवेयणिज्जे ते' जेहि चेव दारेहिं कितं तेहिं चेव वेदिज्जतित्ति तद्दारवेदणिज्जं, जहा अदत्तदाणा तेण ण लभंति, सेसं तहेव। 'अप्पेगे वइं जुंजन्ति' ॥ १७४ ॥ अप्येके, न सर्वे, वाचं जुञ्जंति वाचमुदीरयन्तीत्यर्थः, अहो एते 'चरगा पिंडोलगा' पिंडेसु दीयमानेसु उल्लेति पिंडोलगा, अधमजातयः ब्राह्मणा उत्तमाः क्षत्रियाः वैशा मध्यमाः शूद्रा अधमाः, ब्राह्मणस्य किल भिक्षा इष्टा क्षत्रिये कृषी, अवशेषास्तु अवलगन्ति–क्लेशं कुर्वन्ति तेन तत् पिण्डोलगाः, मुण्डेत्यशिष्टाः, स्वेदमलमत्कुणादिभिः खाद्यमाना अङ्गुलीनखशुक्तिशलाकादीनां कण्डुइतमंगैः विणट्ठंगा 'उवजलंति' उवचितजल्ला मलसकटाच्छादिताङ्गत्वात्, उज्झायंति वा, पठ्यते च–उज्झाओ मृगो, नष्ट इत्यर्थः, उज्झातमृगसमाः 'असमाहितं'ति अशोभना विवृताङ्गत्वात् अथवा असमाहिता–दुःखिता 'एवं विप्पडिवण्णेगे०' ॥ १७५ ॥

सिलोगो, एवमनेनप्रकारेण न सम्यक् प्रतिपन्नाः विप्रतिपन्ना एगे मिथ्यादृष्टयः, स्वयमजानकाः न च ज्ञानवतां शृण्वन्ति; अज्ञानं हि तमो, ते ततो अण्णाणतमातो तमन्तरं वा याइ, उक्कोसकट्ठितीयं मोहणिज्जं कम्मं बंधंति, एवं णाणावरणिज्जं दंसणावरणिज्जं, एगिंदियाइयाइसु वा एगंततमासु जोणीसु उववज्जंति, णिच्चंधकारेसु वा णरएसु, बुद्धीए मंदा मोहो—अण्णाणं पाउता—छण्णा, अथवा मतिमंदा इत्थिगाओ य, मंदविण्णाओ स्त्रीमोहेण, उक्ताः शब्दाः। इदाणिं फासा 'पुट्ठो य दंसमसएहिं' सिलोगो ॥१७६॥ सिंधुतामलित्तिगादिसु विसएसु अतीव दंसगा भवंति, अप्रावृतास्तैः भृशं बाध्यमानाः शीतेन च अत्थरणपाउरणट्ठताए तणाइं सेवमाणा तेहिं विज्झंति, अचाइया अधियासितुमिति वाक्यशेषः, इदं च दुःखमधिसह्यते यदि नाम परः लोकः स्यात्, स च 'न मे दिट्ठे परे लोए, किं परं मरणं सिया' न हि मयाऽन्येन वा साक्षात्परलोको दृष्टः यन्निमित्तं क्लेशः सह्यते, क्लेशान् सहमानस्य हि परं मरणं सिया, तदप्यनिष्टं, मरणमिहेच्छेत् यद्यसौ परलोकः स्यादिति, संदिग्धे तु परलोके किं दुःखेन तपसा कृतेनेत्ययमदर्शनपरीषहोपसर्गः, किंच 'संतत्ता केसलोएणं' सिलोगो ॥१७८॥ समस्तं तप्ताः क्लिश्यन्त एभिराक्रुष्टा इति क्लेशाः, दुःखभीरवो हि कचित् केसलोयपराजिता विप्पडिवज्जंति तेषां स एवोपसर्गः, 'बंभचेरं' इत्थिपरीसहो तेण पराइता—उवसग्गिता अणुवसग्गिता वा 'तत्थ मंदा विसीदंति मच्छा पविट्ठा व केयणे' केयणं णाम कडवल्लसंठितं, मच्छा पाणिए पडिणियत्ते उत्तारिज्जंति इत्यर्थः, खुड्डमादी, तत्थ ते पविट्ठा वरागा सोयंति विसीदंति—परिघोलंति जया व पाणियं णिघुलितं। 'आयदंडसमायारा' सिलोगो ॥१७८॥ आत्मानं दंडयितुं शीलं येषां ते भवंति आत्मदंडसमाचाराः, मिच्छत्तसंठिता भावणा जेसिं ते भवंति मिच्छासंठितभावणा, ते तु कथमात्मानं दंडयंति ?, उच्यते, ते साधून् दृष्ट्वा हर्षात्प्रदोषाद्वाऽपि पिट्टेति जहा सो पुरोहितपुत्रः, केयित्ति

ण सव्वे, लूयति अक्कोसंति पिट्टेति य अनार्या दसणादीहिं। 'अप्पेगे पलियंतंमि' सिलोगो ॥१७९॥ वा अपि एके, न सर्वे, 'पडियंतं' समंतादंतं परियन्तं, कस्य ?, देशस्य, तस्मिन् २ देशपर्यन्ते केचिद्भाषंते—चारिकोऽयं चारयतीति चारकः, येषां परस्परविरोधः ते चारिकमित्येनं संवदंते, चोरं वा, तं 'सुव्वयंपि' संगतं—शोभनं व्रतं, संकिता वा णिस्संकिया वा भूत्वा बंधन्ति भिक्षुयं बालाः, जहा गोसालो बद्धो आसीत्, 'कसायवसणेहि य'त्ति तत्पुरुषः समासः द्वन्द्वो वाऽयं, समावत एव केचित्साधून् दृष्ट्वा कसाइज्जंति, वसणं केसिंचि भवति, कप्पडिगा पासंडिया वा होंति, णच्चावेंति वा, तेष्वेव पर्यन्तेषु मध्यदेशेषु वा कंचि रियमानं कश्चिद्बालो 'तत्थ दंडेण संवीते' सिलोगो ॥१८०॥ दंडो णाम खीलो दंडप्पहारो वा, मुट्ठी मुट्ठीरेव, फलं—चवेडाप्रहारः संवीतः—संप्रहत इत्यर्थः, 'णातीणं सरती बालो' जइ णाम णातयो केयि एत्थ होत्था भातिमित्तादयो णाहमेवंविधां आवर्ति पावेंतो 'इत्थी वा कुद्धगामिणी' जधा सा अचंकारितभट्टा, क्रुद्धा गच्छतीति कुद्धगामिणी जहा सा 'एते भो फरुसा फासा' सिलोगो ॥१८१॥ फरुमा नाम स्नेहवियुक्तैरुदीरिता, दुक्खं अधियासिज्जंति दुरधियासगा अप्पसत्तेहिं, ते अणधियासेमाणा हत्थी वा सरसंवीतः शरप्रहारैरित्यर्थः, यथा रौद्रसङ्ग्रामे हस्तिनः शरसंवीता नश्यन्ति, एवं भावसंग्रामादपि परीसहपरायिता क्लीवा, 'वराका' नाम परीषहे वराकाः पुनरपि गृहं गच्छंति गमिष्यंति च, पठ्यते च 'तिव्वसढगा गता गिहं'ति बेमि, तीव्रं शठाः तीव्रशठा तीव्रैर्वा शठाः तीव्रशठाः, तीव्रैः परीषहैः प्रतिहता ॥ इति तृतीयस्योपसर्गाध्ययनस्य उद्देशः प्रथमः॥३–१॥

स एव उपसर्गाधियारो अणुवत्तत एव, 'अथेमे सुहुमा संगा' सिलोगो ॥ १८२ ॥ 'अथे'त्यानन्तर्ये पडिलोमोवसग्गा गता, इदाणिं अणुलोमा. उक्तं हि—पढमम्मि य पडिलोमा णाती अणुलोमगा वितीयंमि'। सुहुमा णाम निउणा, न प्राणव्यपरो-

पणवत् स्थूरमूर्त्तयः, उपायेन धर्माच्च्यावयंति, उक्तं हि–शक्यं जीवितविघ्नकरैरप्युपसर्गैरुदीर्णैः माध्यस्थ्यं भावयितुं, अणुलोमा पुण पूजासक्कारादयः भिक्खूणं दुरुत्तरा भवंति, वक्ष्यति हि 'पातालवदुरुत्तरा' सज्जते यत्र स सङ्गः, संगोत्ति वा विग्घोत्ति वा वक्खोडित्ति वा एगट्ठा, अल्पसत्त्वानां दुस्तरा, नतु सत्त्ववतां,'जत्थ मंदा विसीदंति' मंदा उक्ता, विसेसेण सीयंति च, चएत्ता णाम असक्किता जवइत्तएत्ति वा लाढित्तएत्ति वा एगट्ठा, 'अप्पेगे णातयो दिस्स'सिलोगो ॥१८३॥ अपिः पदार्थसंभावने, एके, न सर्वे, ज्ञातयो–मातापित्रादि पव्वयंतं पुव्वपव्वइतं वा दट्ठूण रुयंति, किध ?, कवणकरुणाणि,'नाधपियकंतसामिय०' परिवारिया दव्वतो भावतो य, वयं वृद्धा कर्मासहिष्णवः तदिदानीं पोसाहि णे, आबाल्यात् पुट्ठो मदादिभिः,'पिता ते थेरओ तात !'सिलोगो ॥१८४॥ तात ! इत्यामन्त्रणं, उक्तं हि–"पिता ते स्थविरो तात !, वयं च गतयौवनाः। न च तत्कर्म जानामि, यज्ज्ञानात्यपरो जनः ॥१॥" त्वां हि मुक्त्वा(गतः)अस्यां दशायां कोऽन्यः पोषयिष्यति ?, तं तु सद्भावतो ब्रूते कौतुकाद्वा, अन्येष्वपि पुत्रेषु विद्यमानेषु ब्रवीति–पोस णे तात ! पुट्ठो सि, कस्स णाम तुमं अम्हे अणाहाइं परिचयसि, किंच–कश्चिद् जनैः सुहृद्भिर्वा निष्काममेवमुपदिश्यते–'पिता ते थेरतो तात !' थेरगो दंडधरितग्गहत्थो अत्यन्तदशां प्राप्तः, युक्तं त्वयि जीवमाने मल्लपिंडमडंतो ?, कथं च तव धर्मः स्यात् अस्मिन्विलवमाने ?, स्वमा नाम ते भगिनी, सा य खुड्डल्लिया भद्रं, बृहत्तमा कन्या वा, कोऽस्या निर्वहणं करिष्यति ?, एवमादीणि कार्यसहस्राणि संताणि असंताणि वा उदीरंति,'भायरो ते सगा तात !' श्रण्वंतीति श्रवा–आणाउववायवयणणिद्देसे य चिट्ठंति, समानोदराः सोदराः, सोदरग्रहणात् अन्येऽपि ताव एकपित्रादयो छड्डिज्जंति सुहं, न तु सोदराः। 'मातरं पितरं' सिलोगो ॥ १८५ ॥ मातापितरौ हि सुश्रूषार्हावेतावदानीं पुष्णाहि, एवं लोको भविष्यतीत्ययं परश्च, अस्मिँस्तावद्यशः कीर्तिश्च

भवति मङ्गलं च, उक्तं हि–'गुरवो यत्र पूज्यन्ते, यत्र धान्यं सुसंभृतम्। अदन्तकलहो यत्र, तत्र शक्र! वसाम्यहम् ॥ १॥' परलोकश्च भवति गुरुशुश्रूषया, एते हि पदीवत्थिया समणगा भवंति जे मायापितरं सुसुस्संति, तेण तेसिं गुरुपडिणियाणं कतो लोगो धम्मो वा भविस्सति? ॥ किं चान्यत्–'उत्तरा महुरुल्लावा' सिलोगो ॥१८६॥ उत्तरा नाम प्रतिवर्षमुत्तरोत्तरजातकाः समघटच्छिन्नगाः, पठ्यते 'इतरा मधुरोल्लावा' इतरा णाम खुड्डलगा अव्यक्तमहुरोल्लावका: 'पुत्ता ते तात! खुड्डगा' तात इत्यामंत्रणं, खुड्डगत्ति अप्राप्तवयसः अकर्मयोग्या वा 'भारिया ते णवा तात!' भरणीया भार्या, नवा नाम नववधूः अप्रसूता गर्भिणी वा, मा सा अण्णं जणं गमेज्ज, उब्भामए वा करेज्ज, जीवंतए तुमंमि अण्णं पतिं गेण्हेज्जा, ततो तुज्झ अद्धीतीया भविस्सति, अम्हवि य जणे छायाघातो अवण्णओ जणे भविस्सतीति, किंच–जो जहा पुव्वमासी तस्स हि स एव उवसग्गो पायो भवति, येनान्यथा ब्रवीति, तद्यथा–यः कृष्यादिकर्म्मपराजितः तं दृष्ट्वा ब्रुवते 'एहि ताव घरं जामो' सिलोगो ॥ १८७ ॥ जाणामो जहा तुमं अतिकम्मा भीतो पव्वइतो, इदाणिं वयं कम्मसमत्था, कम्ममहायगा य कम्मसमत्था, कम्मसहायगा य कम्मसहायकत्वं प्रति भवतः, तदिदानीं कुमारः प्रति भण्णइ–ण चंप गोणिवि, हत्थेण मा छिवा, णित्तेण वा उक्खिवताहित्ति, दूरगतं च णं दट्ठूण भणाति–आसण्णं वा गृहमागच्छ,'बितियंपि तात! पासामो जामो ताव सयं गिहं' बिंतियंपि तात! पासामो स्वे गृहे तिष्ठन्तमिति वाक्यशेषः, बितियंपि तात पेच्छामु सव्वाइं णियल्लगाइं। 'गंतुं तात पुणो गच्छे' सिलोगो ॥ १८८ ॥ गत्वा स्वजनपक्षं दृष्ट्वा पुनरागमिष्यसि, न हि त्वं तेनाश्रमणो भविष्यसि, यस्त्वं स्वजनमवलोकयित्वा पुनरायास्यसि 'अकामं ते परक्कमं' को नाम अणिच्छिओ 'परक्कमंतं'ति परिजायंतं अथवा यदा त्वं परं प्राप्य निष्णातो भविष्यसि भुक्तभोगत्वात् तदा अकामकं पराक्रमंतं

'को तं वारेतुमरिहति' धरेतुं कं वा ?। पव्वइयगं भणंति–'जं किंचि अणगं तात ! तंपि सव्वं समीकतं' उत्तारियंति वा विमोक्खितं वा एगट्ठं, हिरण्णं ववहाराओ, जो वा णियगो खीणभंडमुल्लो पव्वइओ तं भणंति–हिरण्णं ते कताकतं दासामो, आदिग्रहणात् सुवण्णं वा भंडमुल्लं वा दासामो जेणेव ववहरिस्ससि, व्यवहारार्थं व्यवहाराय, अपि पदार्थादिषु तच्च ते दासामो, अन्यच्च यद्वक्ष्यसि, 'इच्चेवं णं सुसिक्खंतं' सिलोगो ॥१८९॥ साधुक्रियां सुट्ठु सिक्खंतं सुसिक्खंतं पाठान्तरं सुसेहिंति वा–उस्सिक्खावेंतीत्यर्थः, 'कालुणतो उवट्ठितं'ति कलुणाणि कंदंता य रुयंता य णिरिक्खंता य तं उवसग्गेंति, समुट्ठिता उप्पव्वावेतुं, स च तेहिं णाणाविधेहिं 'विबद्धो णातिसंगेहिं, ततो गारं पहावती' गारं नाम अगारत्वं, भृशं वा धावति पधावति। किंचान्यत् 'वणे जातं जहा रुक्खं' सिलोगो ॥१९०॥ कंठ्यं, एवं परिचिट्ठ(वेढं)ति द्रव्यतो भावतश्च परिवेढणं असमाधीएत्ति, तं तं भणति करेंति य येनास्यासमाधिर्भवति, अथवा असाधुताते द्रव्यतो भावतश्च स तैः करुणादिभिः 'विबद्धे णातिसंगेहि हत्थी वावि णवग्गहे ॥१८२॥ कंचित्कालं कासारोच्छुखंडादिभिरनुवृत्त्य पश्चात् आहारप्रहारैर्बाध्यते, तेऽप्येनं पुनर्जातमिव मन्यमानाः तस्याभिनवानीतस्य पिट्ठतो परिसप्पंति, को दृष्टान्तः ?, 'सूतिगोव्व अदूरतो' यथा तद्दिनसूतिकागृष्टिर्वत्सकस्य पीतक्षीरस्य इतश्चेतश्च परिधावतो ईषदुन्नतवालधिः सन्नतग्रीवा रंभायमाणा पृष्ठतोऽनुसप्पति, स्थितं चैनं उल्लिखति, अदूरतोऽस्यावस्थिता स्निग्धदृष्ट्या निरीक्षते, एवं बंधवा अप्यस्य उदकसमीपं चान्यत्र वा गच्छंतं मा णासिस्सिहित्ति पिट्ठतो परिसप्पंते, चेडरूवं वदे, मग्गतो देन्ति शयनमासीनं चैनं स्नेहमिवोद्गिरंत्या दृष्ट्या अदूरतो निरीक्षमाणा अवतिट्ठंते। 'एते संगा मणुस्साणं' सिलोगो ॥१९३॥ एते इति ये उद्दिष्टाः, सज्जते येन स संगः, मनुष्याधिकार एव वर्त्तते तेन मनुष्यग्रहणं, पाताला नाम वलयामुखाद्याः, सामयिकोऽयं

दृष्टान्तः, उभयाविरुद्धस्तु पातालः समुद्र इत्यपदिश्यते, न तारिमा अतारिमा न शक्यते बाहूभ्यां तर्तुमिति, 'कीवा' कातरा जत्थ 'विसण्णेसी विसण्णं एसतीति विसण्णेसी 'णातिसंगेहि मुच्छिता' विसण्णा वा आसंति, विसण्णेसिं णातिसंगेहि मुच्छिता, अथवा कीवा जत्थावकीसंति, अपकृष्यन्ते मोक्षगुणातो धम्मातो वा, किंणिमित्तं णातिसंगेहि मुच्छिता ?, 'तं च भिक्खू परिण्णाय सव्वे संगा महासवा' सिलोगो ॥१९४॥ तदिति यदेतदुक्तं अथवा तमुपसर्गगणं दुविधाए परिण्णाए परिण्णाय, सव्वे इत्यपरिशेषाः, संगा एव महांति कर्माण्याश्रवंतीति। 'अहिमे संति आवट्टा' सिलोगो ॥ १९५ ॥ अहो दैन्यविसयामंत्रणेषु, अथवा इमे संति आवट्टा, अथेत्यानन्तर्ये, इमे वक्ष्यमाणाः, संतीति विद्यन्ते, द्रव्यावर्त्ता नदीपूरो, भावावर्त्ता यैः प्रकारैरावर्त्तन्ते संयमभीरवः, कासवेण पवेइता–प्रदर्शिता इत्यर्थः, 'बुद्धा जत्थावसप्पन्ति' बुद्धा दुविधा–दव्वे भावे य, दव्वे णिद्दाबुद्धा भावे णाणातिबुद्धा, अवसर्पन्ति नाम अवगच्छंति, 'सीदंति अबुधा जहिं'॥ किंच यः कश्चित्संयतः कस्सति रण्णो पुत्तो वा अरायवंसिओवि कोऽवि रूवसंपण्णो विज्जामंतकलागुणसंपण्णो वा, तंजहा–'रायाणो रायमच्चा य' सिलोगो ॥ १९६ ॥ रायाणो चक्कवट्टिमादी, तत्थ बंभदत्तेण चित्तो निमंतिओ, रायमच्चा–इस्सरतलवरमाडंविगादि माहणा–भट्टा खत्तिया नाम गणपालगा गणभुत्तीए वा अष्टराज्या, जे वा अरायाणो अरायवंसिया णिमंतयंति भोगेहिं 'भिक्खुयं साधुजीविणं'ति साधुविहीए फासुएण पडोआरेण जीवतित्ति साधुजीवी, अथवा साध्विति प्रशंसायां, शोभनेन जीवनेन जीवतीति, संयमजीवितेनेत्यर्थः, के च ते भोगा ?, इमे, 'हत्थस्सरहजाणेहिं' सिलोगो ॥ १९७ ॥ हत्थिअस्सरहादीणि पसिद्धाणि, जाणाणि सीदासन्दमाणिगादीणि, तं पुण जले थले य, जले णावादि, थले सीतासंदमाणिगादी, विहारगमणा इति–उज्जाणियागमणाई, चशब्दादन्यैश्च श्रोत्रादिभिः

इन्द्रियक्षमैर्विषयैर्यथेष्टतः 'भुंजाहिमाइं भोगाइं' इमानीति विद्यमानानि प्रत्यक्षाणि वा महरिसित्ति, एवमपि असावस्माभिरन्यैर्वा पूजनीयश्च, किंचान्यत्–तमेवं णिमंतयंति 'वत्थगंधमलंकारं' सिलोगो ॥ १९८ ॥ वत्थाणि–अयिणगादीणि गंधा–कुष्ठादयः अलंकारा–हारादयः, स्त्रियः अहं ते धूतं भगिणीं वा देमि, अण्णं वा जं इच्छसि, सयणाइं अत्थुतपच्चुत्थुताणि, चशब्दात् लोही-लोहकडाहकडुच्छुगादीणि सव्वो घरोवक्खरो, सहीणे जारिसो चेव मम परिच्छतो तारिसं चेव दलयामि, तेनोपचितो भुंजाहि-माइं भोगाइं मया विधीयमानानि, आउसो ! पूजयामि ते, साम्प्रतमेभिर्वस्त्रादिभिः पूजयामि, पूजयीष्यामश्च त्वं, सर्वसत्त्ववशयिता भविष्यसि, किं चान्यत्–न च तवास्माभिरभ्यर्थ्यमानस्य कृततपःप्रणाशो भविष्यति, कथं ?, 'जो तुमे णियमो चिण्णो' सिलोगो ॥ १९९ ॥ इंदियणोइंदिएहिं चीर्णो–कृतः भिक्खुभावंमि उत्तमो, भिक्खुभावो णाम पव्वज्जा. उत्तमो असरिसो, अगारमावसं-तस्स सव्वसो चिट्ठती, तथा संविज्जते वा, न विनश्यतीत्यर्थः, लोकसिद्धमेव ससुकयस्स विपुलत्ता। किंचान्यत्–'चिरं दूइज्जमा-णस्स' सिलोगो ॥२००॥ चिरं तुमे धम्मो कतो, दूइज्जता य णाणापगारा देसा दिट्ठा, तत्रोवणाणि तित्थाणि य, 'दोष इदानीं कुतस्तव ?' किं त्वया चौरत्वं कृतं पारिदारिकत्वं वा ?, अथवा दोसो पावं अधर्म्म इत्यर्थः स कुतस्तव ?, क्षपितस्त्वया, कृतं सुम-हत्तपः, ण य ते उप्पव्वयंतस्स वयणिज्जं भविस्सति, किं भवं चोरो परदारिगो वा ?, ननु तीर्थयात्रा अपि कृत्वा पुनरपि गृहमा-गम्यते, एवमादिभिः हस्त्यश्वरथवस्त्रादिभिः निमन्त्रणैश्च ते अणियल्लगा वा 'इच्चेव णं णिमंतेंति गोयारेण व सूयरं' णीयारो णाम कुंडगादिया, स तेण णीयारेण छितो घरे सूयरगो अडविं ण वच्चति मारिज्जति य एवं सोऽवि असारेहि णिमंतितो तो भोत्तुं मरणणरगादियाइं दुक्खाइं पावेंति। 'चोदिता भिक्खुचरियाए' सिलोगो ॥ २०१ ॥ चोदिता नाम वेधिता तज्जिया बाधिता

इत्यर्थः, चरणं चर्या—चक्रवालसामायारी, जवइत्तएत्ति वा लाढेत्तिएत्ति वा एगट्ठं, 'तत्थ मंदा विसीदंति उज्जाणंसि व दुब्बला' केइ आयसमुत्थेहिं केई परमसमुत्थेहिं केई उभयसमुत्थेहिं, ऊर्द्ध्वं यानं उद्यानं, तच्च नदी तीर्थस्थलं गिरिपब्भारो वा, तत्थ पुंगवावि य आरुभंता सातिज्जंति, किमंग पुण दुब्बला दुप्पदा चतुप्पदा वा ?, एवं केऽपि पव्वयंता चेव भावदुब्बला सीयंति, किं च-'अचयंता य लूहेणं' सिलोगो ॥२०२॥ अचएंता—अशक्नुवन्तः, लूहं दव्वे य भावे य, दव्वे आहारादि, भावलूहं संयम एव, तवोवधाणेण तज्जिता अवहत्थिता, तत्थ मंदा विसीदंति, पंके जीर्णगौः जरद्गववत् 'एवं णिमंतणं लद्धुं' सिलोगो ॥२०३॥ एतं णिमंतणंति जं हेट्ठा भणियं, लद्धुं—प्राप्तुं मुच्छिता विसएसु, गिद्धा इत्थिगासु, अज्झोववण्णा कामेसु, कामा—इच्छामदणकामाः, चोइज्जंता णाम णिब्भत्थिज्जंता परिस्सहेहिं, णिमंतिज्जमाणा वा, गिहगयत्ति बेमि, पुनर्गृहं गत्वा पुनर्गृहस्थाभूत्वा इत्यर्थः, णिज्जुत्तीए वुत्तो दुविधा उवसग्गा ओहे ओवक्कमे य, अज्झत्थविसीयणा य, स च बालपव्वइतो तरुणीभूतश्चिन्तयति—चिरकालं प्रव्रज्या दुष्करा कर्तुमित्यतो विसीदंति, दृष्टान्तः 'जहा संगामकालंमि' सिलोगो ॥ २०४ ॥ येन प्रकारेण यथा, सङ्ग्रामकालो नाम समभिचारितं युद्धं, तत्थ कोइ वचंतो भीरु पच्छतो उवेहति 'वलयं गहणं णूमं' वलयं णाम एक्कदुवारा गड्डा, परिक्खो वा वलयसंट्ठितो वलयं भण्णति, गृह्यते यत्तद्गहनं—वृक्षगहनं लतागुल्मवितानादि च, नूमं नामाप्रकाशं, जत्थ णूमेति अप्पाणं गड्डाए दरिए वा, 'को जाणेति पराजये'त्ति दैवायत्तो हि पराजयो, 'मुहुत्ताणं मुहुत्तस्स' सिलोगो ॥ २०५ ॥ मीयतेऽनेनेति मुहूर्त्तः, बहूनां हि मुहूर्त्तानां एकः मुहूर्त्तो भवति यत्र विजयो भवति पराजयो भवति वा, जयश्चेत् इत्यतः शोभनं, पराजयश्चेदित्यतो वरं पराजयतो अवसर्पिष्यामः, अवसर्पितो इति भीरू उवेहती, एस दिट्ठंतो, अयमर्थोपणयो—'एवं तु समणा एगे' सिलोगो ॥२०६॥

एवमनेन प्रकारेण 'तु' पूरणे, एगे, ण सव्वे, संजमे तैस्तैः प्रकारैः अबलं ज्ञात्वा अप्पगं 'अणागयं भयं दिस्स' अणागतं णाम अप्पत्तं, मा णाम एवं होज्जत्ति, ततः 'अवकप्पंतिमं सुतं' अत्र च रक्षणादि, अवकल्पयंति अधीयंत इत्यर्थः, 'इमानी'ति अर्थोपार्जनसमर्थानि गणियणिमित्तजोइसवायसद्दसत्थाणि, 'को जाणति वियोवायं' सिलोगो ॥२०७॥ विउवातो णाम व्युपातः, सो उण इत्थीपरीसहातो भवति, ण्हाणपियणादिणिमित्तं उदगाओ वा, वा विकप्पे, जो वा जस्स पलिओवमादि, परिसहजिता अमुकेण लिंगेण कोंटलवेंटलादीहिं कज्जेहिं अट्टज्झाणेण चोदिज्जंता य वक्खामो, चोदिज्जंता-पुच्छिज्जंता, प्रायशः कुण्टलट्ठीओ लोगो समणे पुच्छति, तत्थ चरेस्सामो, विज्जामंते य पउंजिस्सामो 'णो ण अत्थि पकप्पियं'ति ण किंचि अम्हेहिं पुव्वोवज्जितं धणं पेइयं वा, एवं णच्चा पावसुतपसंगं करेंति, 'इच्चेवं पडिलेहंति' ॥२०८॥ इति एवं इच्चेवं, पडिलेहंति णाम समीक्षंते-संप्रहारेंति, भावग्गहणं भावणूमाइं पडिलेहंति, 'वितिगिंछासमावण्ण'ति, किं संजमगुणे सकेस्सामो ण सकेस्सामोत्ति, उक्तं हि-"लुक्खमणुण्हमणियतं कालाइक्कंतभोयणं विरसं।" दिट्ठंतो पंथाणं व अकोवितो, जहा देसितो विगलपथे चितेंतो अच्छति-किमयं पंथो इच्छितं भूमिं जाति ?, एगत्तोवि ण णिव्वहति, अकोविया अयाणगा, उक्ताः अप्पसत्था, इदाणिं पसत्था-'जे तु संगामकालंमि' सिलोगो ॥२०९॥ जेत्ति अणिद्दिट्ठणिद्देसे, तु विसेसणे, ज्ञाता णाम प्रत्यभिज्ञाता नामतः कुलतः शौर्यतः शिक्षातः, तद्यथा-चक्रवर्त्तिबलदेवा वासुदेवमाण्डलीकादयः, प्राकृताश्च वीरपट्टगेहिं बद्धगेहिं सण्णद्धबद्धवम्मियकवयउप्पीलियसरासणपट्टिया गहियाउधपथरणा समूसियधयग्गा सूरा एवं चक्रवर्त्यादीनां पुरतो गच्छंति, सुरपुरंगमा न ते बलयादीणि पडिलेहन्ति, ते तु संपहारेंति "तरितव्वा च पइण्णिया मरियव्वं वा समरे समत्थएणं। असरिसजणउल्लावया ण हु सहितव्वा कुले पसूयएणं ॥१॥ परबलं जेतव्वं

मरियव्वं वा, ण उ पिट्ठतो पेहंति, अपत्ते जुद्धे जुद्धमाणे वा, किं परं मरणं भवेत् ?, मरणादप्यनिष्टतमं अश्लाघ्यत्वं, मरणादपि विशिष्यते भग्नप्रतिज्ञजीवितं, उक्तः प्रशस्तदृष्टान्तः, तदुपसंहारः प्रशस्त एव। 'एवं समुट्ठिते भिक्खुं' सिलोगो ॥ २१० ॥ सम्यग् उत्थितं समुत्थितं दव्वसमुत्थाणेण भावसमुत्थाणेण य, आगारबंधणं छित्त्वा अज्झत्थो, अवसीतयाणं 'आरंभं तिरियं कट्टु'त्ति दव्वे भावे वाऽऽरंभः, तिरियं णामादि, तिरिच्छं वोलेंति, अनुलोमेहिं दुक्खमतिक्राम्यंते नदीश्रोतोवत् परीसहोपसर्गा, णिउणो णेव्वाणरज्जकंखी, अत्तत्ताए—आत्महिताय सर्वतो संव्रजेत्, सिद्धिगमनोद्यतेन मनसा, अथवा आतो—मोक्षो संजमो वा अस्यार्थः, आतत्थाए, अथवा आप्तस्यात्मा आप्तात्मा आप्तात्मैव आत्मा यस्य स भवति अप्पात्मा इष्टो, वीतराग इव व्रजेदित्यर्थः, अज्झत्थविसीदणत्ति गतं। इदाणिं परवादवयणं, तं अत्तट्ठाए परिव्वयंतं 'तमेगे पडिभासंति' सिलोगो ॥ २११ ॥ तमिति तं अत्तट्ठयाए संवुडं रीयमाणं, एगे ण सव्वे, समंता भासंति परिभासंति, आजीवप्रायाः अन्यतीर्थिका, सुत्तं अणागतोभासियं च काऊण वोडिगा, 'साधुजीवणं'ति णाम साधुवृत्तिः अपापजीवनमित्यर्थः, जे ते एवं भासंति 'अंतए ते समाहिते' अंतए नामानाभ्यन्तरतः—दूरतस्ते समाधिए, णाणादिमोक्खो परसमाधी, अत्यन्ते असमाधौ वर्त्तन्ते, असमाहिए अकारलोपं कृत्वा, संसारे इत्यर्थः, किं प्रभापन्ते ? 'संबद्धसमकप्पाओ' सिलोगो ॥२१२॥ समस्तं बद्धाः संबद्धा-पुत्रदारादिभिर्ग्रन्थैर्गृहस्थाः, संबद्धैः समकल्पाः तुल्याः इत्यर्थः, जहा गिहत्था माता मे पिता मेत्ति एवमादिभिः संगैर्बद्धा, अण्णमण्णसमुत्थिता णाम माता पुत्ते मुच्छिता पुत्तोवि मातरि एवं भवंतोऽपि शिष्याचार्यादिभिः परस्परसंबद्धाः, अन्यचेदं कुर्वता 'पिंडवातं गिलाणस्स, जं सारेध दलाध य' पिंडस्य पातः पिंडपातः भिक्षं, एवं पिंडावायं गिलाणस्स आणेत्ता दद्धं, यच्च परस्परतः सारेध वारेध पडिचोदेध सेज्जातो

उद्धवेहन्ति, जं च गिलाणस्स आयरियबुड्ढमामाएसु आहारउवधिवसधिमादिएहि य उवग्गहं करेह 'एवं तुब्भे सरागत्था अण्णमण्णमणुवसा' सिलोगो ॥ २१३ ॥ रागत्थिता सरागत्था सदोसमोहा, अन्योऽन्यस्य अनुगता वशं अणुव्वसा 'भट्ठसप्पधसब्भावा' शोभनः पंथा सत्पन्थाः ज्ञानादि, सतो वा भावः सद्भावः, सत्पथसब्भावो नाम यथार्थोपलंभः, 'संसारस्स अपारगा' पारं गच्छंतीति पारगा न पारगा अपारगाः। एवं भासमाणेसु 'अह ते पडिभासेज्जा' ॥ २१४ ॥ अथेत्यानन्तर्ये तान् प्रतिभाषते 'भिक्खू मोक्खविसारदो' विसारदो नाम सिद्धान्तविनायकः, स किं पडिभासति ?, एवं तुज्झेऽत्रभासंता दुपक्खं चेव सेवधा, दुपक्खो णाम संपराईयं कम्मं भण्णति गृहस्थत्वं च, किंच 'तुब्भे भुंजह वाएसु' सिलोगो ॥२१५॥ तुब्भे जेहिं भिक्खाभायणेहिं भिक्खं गेण्हध तेहि आसंगं करेह, आजीविका परातकेसु कंसपादेसु भुंजंति, आधारोवकरणसज्झायज्झाणेसु य मुच्छं करेह, गिलाणस्स पिंडवातपडियाए गंतुमसमत्थस्स भत्तमंतेहिं कुलगेण वा अण्णतरेण वा मत्तेहिं अभिहडं भुंजेह, एवं तुब्भेहिं पादपरिभोगेहिं बंधोऽणुण्णाओ भवति, अन्तरा य कायवधो, सो य तुब्भ णिमित्तं आणंतो भत्तिमंतोऽवि कम्मबंधेण लिप्पति, पाणिपायंपि ण कायव्वं जति पादे दोसो, स च किं तुब्भ देंतो णट्ठसप्पधसब्भाव उदाहु सप्पधि वट्टति ?, अविण्णाणा य मिगसरिसा तुब्भे जेण असंकिताइं संकथ संकितट्ठाणाइं ण संकथत्ति, 'तं च बीओदगं भोत्त'त्ति कन्दमूलानि ताव सयं भुंजह, सीतोदगं पिवध, एवं पुढवितेउवाउवधे वट्टह, जं च छक्कायवधेण णिप्फण्णं उद्देसियं तं भुंजह, तुब्भे चेव गिहत्थसरिसा, पावतरा वा गिहत्थेहिं, येन ते गृहस्था अनभिगृहीतमिथ्यादृष्टयोऽपि भवंति, न तु भवंतः, जेण अभिग्गहितमिच्छदिट्ठिणो साधुपरिवायं च करेह, दव्वं खित्तं कालं सामत्थं च पुणो वियाणित्ता कीतकडच्छेज्जादिसुवि दोसा भाणितव्वा, ते एवं असंजतेहिंतोऽवि पावतरा

कता समाणा महता अपत्तिए 'लित्ता तिव्वाभितावेणं सिलोगो ॥२१६॥ तिव्वाभितावो णाम तीव्रोऽमर्षः दंसणमोहणिज्ज-कम्मोदएणं कोधमाणकसायोदएण य लित्ता, उज्झिता णाम शून्या, एतदेव व्याचष्टे–अण्णा, णाणदंसणचरित्तेहिं असमाहिता, तैरेव विहीणा, 'णाइकंडुइयं साधु'त्ति जहा कंडुइयं साधुत्ति तं अरुकस्स अवरज्झति पच्चुयपीडाहेतुत्वात्, एवं साधुहीलणावि अपसत्था, अथवा 'लित्ता तिव्वाभितावेणं'ति तेण मिच्छादंसणावलेवेण लित्ता गुणेहिं शून्या बुद्ध्यादीहिं असमाहिता आतुरीभूता भणंति–जुत्तं णाम तुब्भेहिं अम्हे गिहत्थसरिसा काउं पापतरा वा, तेन त उच्यन्ते 'णातिकंडूइतं साधु' साधु णाम सुट्ठु, अरुअं हि रुज्झमाणं खज्जइ, तं जति ण सुट्ठु कंडूइज्जइ ततो णातिकंडुइणो साधु अवरुज्झति अरुगस्स अरुइअगत्तस्स वा, अर्थात् प्राप्तं अतिकंडुइयंति भृगमपराध्यते, नातिरूढव्रणस्य, एवं यद्यहं त्वया णातिनिष्ठुरं उक्तो भविष्यति ततोऽहमपि नातिनिष्ठुरमेवापदिश्यात्, त्वया वाऽहं यत्किंचनप्रलापिनाऽसंबंधसमकल्पो व्यपदिष्टः, न चाहं तैर्गुणैर्युक्तो, भवन्तस्तु कन्दमूलोदकभोजिनः उद्दिश्यकृतभोजिनश्च सच्छासनप्रत्यनीकाश्च तेन न कथं गृहस्थैः पापतरा इत्येवं 'तत्तेण अणुसट्ठा ते' सिलोगो ॥ २१७ ॥ तच्चं तथ्यं सद्भूतं नानृतमित्यर्थः, अणुमट्ठा णाम अणुसासिता, ते इति आजीविकाः बोडियादयो ये चोद्दिश्यभोजिनः पाखण्डा, 'अपडिण्णेणं'ति विसयकसायणियत्तेण जाणएण एवं वुत्ता भणंति–'ण य एस णितिए मग्गे' णितिओ णाम नित्यः अव्याहतः एषः 'असमीक्ष्य वति किती' कृतिर्नाम कुशलमतिः पौर्वापर्यसम्बन्धसब्भावार्थोपलम्भस्तु सर्वज्ञज्ञानात् युक्तः, अथवोपदेश एवायं, तत्तेण अणुसट्ठाए अपडिण्णेण जाणएत्ति, कमणुसट्ठाए?, ण एस णितिए मग्गे, न एष भगवतां नीतिको मार्गो, मीतिको नाम नित्यः, एष हि असमीक्ष्य भवद्भिरेव वाचा चटकरमा(त्रा)त्र। वा कृतिः-कृतः। किंचान्यत् 'एरिसा जा वई एसा' सिलोगो ॥२१८॥

एरिसा णाम येयमुक्ता तुब्भे संबद्धसमकप्पा वयं नेति, एषा निर्वाहिका, कथं ?, 'अग्गिवेलुव्व करिस्सिता' वेल्लो हि मूले स्थिरः अग्गे कर्षितः, एवमियं वाक् भवतां संकल्पस्थूला—निश्चयकृता न हि भवति, न संबद्धकल्पा, तथा चोक्तं, कंदमूलादि, उद्दिश्य-भोजित्वाच्च, यतश्चैवं तेन नैष भवतां वाङ्निश्चयः सुन्दरः, अथवा एरिसा जा वई एसा अग्गे वेलुव्व करिसितित्ति जहा धम्मी, कडिल्ले वंसो मूलच्छिण्णो न शक्यते अन्योऽन्यासंबंधत्वात् न शक्यतेऽधस्तात् उपरिष्टाद्वा कर्षितुं, अथासौ वंसो न णिव्विहति, एवं भवतामपि इयं वाक् न निर्वाहिका, तत्र अनिर्वाहिका गिहिणो अभिहिताः, शेषं भवंतो हि सम्प्रतिपन्ना निर्मुक्तत्वात्संसारान्तं करिष्यामः, तन्न निर्वहति, कथं ?, यद्भवतां ग्लायतामग्लायतां गृहस्थः कन्दादीनां मात्रेणानयित्वा ददाति, तत्किल भोक्तुं श्रेयः; न तु यद्भिक्षुणाऽऽनीतमिति, एषा हि वाङ् भवतां न निर्वाहिका, कथं गृहस्था ईर्याति शोधयंति, आगच्छतो चास्य कश्चिद् व्यापादः स्यात्, कश्चानुक्त एवं ब्रूयात् यथा 'गृहीणं अभिहडं सेयं, भुंजितुं ण तु भिक्खुणो' किं च—'धम्मपण्णवणा एसा' सिलोगो ॥ २१९ ॥ धम्मस्स पण्णवणा एसा साहिया, इदाणिं धम्मपण्णवणा गिहत्थाणीयं सेयं ण पव्वइताणीतमिति 'सारंभाण विसोधिया' सारंभा णाम गिहत्था तेषां पापविशोधिका, न हि भवद्भ्यो ददतो विशुद्ध्यन्ते, न तु प्रव्रजिताः दाणधम्मेण संयुज्यंते, यस्मादानयंति ते गृहीभूत्वा यतयः पापेन संबद्ध्यन्ते, 'ण तु एताहिं दिट्ठीहिं' नेति प्रतिषेधे, दृष्टिर्नाम ग्रहो, ण भवद्भिरेताभिर्दृष्टिभिः पूर्वप्रकल्पितमासीत्, प्रकल्पितं प्रदर्शितमित्यर्थः, का दृष्टयः ?, यादृशं किल गृहस्थानां तादृशमस्माकमपि अन्योऽन्यं किल सारयित्वा स्थेयं, न चानुकंपतामनुभवन्तोऽपि ग्लानकृत्यं गृहस्थैः कारयन्ति, अत्र तावदावयोः साम्यं, येन भवन्तो गृहस्थैः कारयन्ति प्रागुक्तं ग्लानस्य तत्कार्यं, मा भूत् संबंधसाम्यकल्पा, न स्युरिति अभिविष्यत्, इदानीं स एव ग्लानो गृहस्थैः कारयन्

तत्कृतमनुजानन्तः भवंतश्च तत्कारिणः तद्द्वेषिणश्च एतां दृष्टिं भावयन्तः कथं सम्बन्धसमकल्पा न स्युरिति, किं चातः?, एवं 'सव्वाहि अणुजुत्तीहिं' सिलोगो ॥२२०॥ योजनं युक्तिः अनुयुज्जत इति अनुयुक्तिः अनुगता अनुयुक्ता वा युक्तिः २ सर्वैः हेतुयुक्तिभिः तर्कयुक्तिभिर्वा, अत एव अचयंता अशक्नुवन्तः 'जवित्तए'त्ति णिजड्डमित्यनर्थान्तरं, कथं ण चएति ?, यथा कश्चिद्बलीवर्दं भयं वा उवमए, स च तं विचिकीर्षुः परेणोच्यते–उत्थाप्यतां तावदयं गौः, ततो यदि शक्ष्यति तत एव ग्रहीष्यामि, स जनो नैप शक्ष्यतीति ब्रवीति–यदि ते रोचते एवमयं गृह्यतां, नन्वेपोऽव्यंगशरीरो निरुपहतवपुर्न दृश्यते?, एवं सामयिक आह परूको वा, समय इति परैरुच्यते, येन परीक्षामहे ततो ब्रूते किमत्र परीक्षया ?, प्रत्यक्ष एवायं दृश्यते बहुजनपरिगृहीतः, ईश्वरस्वामिनं प्रतिपन्नाः, यदि नैवं तत्त्वं स्यात् नैवात्र बहुजनोऽतिप्रसज्जते, लोकिका अपि ब्रुवते–'आज्ञासिद्धानि चत्तारि' न हन्तव्यानि हेतुभिः। भारतं मानवा धर्म्माः, सांगो वेदश्चिकित्सितं ॥१॥ एपामुत्तरः–एरंडकट्ठरासी जहेह गोसीसचंदणपलस्स । मोल्लेण होज्ज सरिसे कत्तियमेत्तो गणिज्जंतो ? ॥१॥ तहवि णिगरातिरेगो सो रासी जह ण चंदणसरित्थो । तह णिव्विण्णाणमहाजणोऽवि सोज्झे विसंवदति ॥ २ ॥ एक्को सचक्खुगो जह अंधलयाणं सएहिं बहुएहिं । होति पहे गहिया वा बहुगावि ण ते अपेच्छंता ॥ ३ ॥ एवं बहुगावि मूढा ण पमाणं जे गतिं न याणंति । संसारगमणगुविलं णिउणस्स य बंधमोक्खस्स ॥४॥" 'ततो वादं णिराकिच्चा' ततः इति ततः कारणात्, वादो णाम छलजातिनिग्गहस्थानवर्जितः, निराकिच्चा णाम पृष्ठतः, वादं निराकृत्वा, ते इति ते आजीविकाद्याः सामयिकाः मस्कराश्च विविधाः प्रगब्भिता धृष्टीभूता इत्यर्थः, 'रागदोसाभिभूतप्पा' सिलोगो ॥२२१॥ रज्यते येन आत्मपक्षे स रागः परपक्षे द्वेपः, अभिभूताः पराजिता इत्यर्थः, रागद्वेपाभ्यामभिभूतो येपामात्मा ते, मरुगा दोसाभिभूयप्पा, 'मिच्छत्तेण अभि-

दुया' अभिभूया इत्यर्थः, त एवं उक्ताः रोपानललोहिताक्षाः भृशममर्षोद्गमप्रस्पंदिताधरोष्ठाः जिता अवदातैर्हेतुभिर्निर्ग्रन्थपुत्रैः परा-
जिताः 'अक्कोसे सरणं जंति' प्रायेण दुर्बलस्य रोषो उत्तरं भवति आक्रोशश्च, रुदितोत्तरा हि स्त्रियः बालकाश्च, क्षांत्युत्तराः साधवो,
दृष्टान्तः 'टंकणा इव पव्वतं' टंकणा णाम म्लेच्छजातयः पार्वतेयाः, ते हि पर्वतमाश्रित्य सुमहन्तमवि हत्थिबलं वा अस्सबलं वा
आगलिन्ति, पराजितास्तु शीघ्रं पर्वतमाश्रयंति, कुतीर्थाः पराजिताः आक्रोशयंति यष्टिमुष्टिभिश्चोत्तिष्ठन्ति, न ते प्रत्याक्रोष्टव्याः इद-
मालंबनं कृत्वा-"अक्कोसहणणमारणधम्मब्भंसाण बालसुलभाणं । लाभं मण्णति धीरो जधुत्तराणं अलाभंमि ॥१॥'बहुगुणप्पकप्पाइ०
सिलोगो ॥२२२॥ गुणा पकप्पिज्जंति जेहिं ताइं गुणप्पकप्पाइं, गुणप्पकप्पो णाम येनात्मपक्षः प्रसाध्यते, परपक्षश्चोभासीयते, अथवा
सर्वपरीक्षकाविरुद्धो दृष्टान्तोऽबाध्यो हेतुर्वा, उक्तंहि—"लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः, हेतुप्रतिज्ञादयः,
आतसमाहितो वत्तए, आत्मसमाधिर्नाम दव्वं खित्तं कालं समत्थं चऽप्पणो वियाणित्ता इति, अथवा के अयं पुरुषे कं च णतेत्ति,
एवं तथा यथाऽऽत्मनो समाधिर्भवति, उक्तं हि–"पडिपक्खो णायव्वो०" अथवा आत्मसमाधिर्नाम यथा परतो घातो न भवति
बाधा वा, किंच–'जेणऽण्णो ण विरुद्धेज्ज' येन चोक्तेन अण्णस्स उवघातो ण भवति, तथा प्रतिज्ञादयो वक्तव्याः यथा च सिद्धा-
न्तविरुद्धा न भवंति, कथं विरुध्यते ?, यो ब्रूयान् त एव हि कृतोद्दिश्यभोजित्वाद् गृहितुल्याः, साधवस्तु मूलोत्तरगुणोद्यताः
शरीरे चानपेक्षाः, ततश्चातिप्रसक्तस्य लक्षणस्य निवृत्तये त्वपदिश्यते 'इमं च धम्ममायाय' सिलोगो ॥२२३॥ अथवा तैः पर-
तन्त्रैरपदिष्टं–ध्यानकृत्यं हि न कर्त्तव्यं, मा भूत् संबद्धसमकल्पः, तदेनमपदिश्यते 'इमं च धम्म०' न यथा भवतां निरनुकंपो
धर्म्मः, अस्माकं हि इमं च धम्ममादाए कासवेण पवेइयं, अथवा ये ते उक्ता उपसर्गा एते हि अग्लायता सोढव्याः, ग्लायतो हि

द्रव्यपरीषहा भवंति, न ग्लायमानस्य न कर्त्तव्यं, कथं-'इमं' इदं च धम्ममादाय इति यद्वक्ष्यामः। तं धर्ममादाय-गृहीत्वा 'कासवेण पवेदिदं' कासवग्रहणात्तीर्थकरणैवेदं प्रवेदितं, न तु स्थविरैः, किंचान्यत् 'कुर्यात् भिक्खू गिलाणस्स' ग्लायते रोगेणान्यतरेण वा प्रथमद्वितीयादिपरीषहादिना, अगिलाणेण-अनार्द्दितेन अव्यथितेन राजाभियोगवत् 'समाधिए'त्ति आत्मनः समाधिहेतोः कर्त्तव्यं, ग्लानस्य वा अथवा समाधीए कायव्वं, ण मणोदुक्कडेण, किंच-न केवलं उवसग्गा एव अहियासेयव्वा ज्ञात्वा सोढव्याः 'संखाय पेसलं धम्मं' सिलोगो ॥२२४॥ संखा अट्ठविधा, तंजहा-णामसंखा ठवणसंखा दव्वसंखा उवम्मसंखा परिणामसंखा गणणासंखा जाणणासंखा भावसंखा, तत्थ जाणणासंखाए अधियारो, संख्याय-ज्ञात्वा, पेसलं दव्वे भावे य, दव्वे जं दव्वं पीतिमुत्पादेति आहारादि, भावपेसलस्तु सर्ववचनीयदोषापेतो भव्यानां धर्म्म एव, सो धम्मो दुविधो-सुतधम्मो चरित्तधम्मो य, कस्य तौ प्रीतिमुत्पादयेयातां ?, दृष्टिमानिति दृष्टिमतः, सम्यग्दृष्टिः परिनिर्वृत्तः सीतीभूत इत्यर्थः, उवमग्गे अधियासेयव्वे उपसर्गा ये उक्ताः ये च वक्ष्यमाणाः तान् सर्वान्निधियासयन् सहन्नित्यर्थः, आमोक्षाय परिसमाप्तेः समन्ता 'वयेज्जासि' परिवयेज्जासि, मोक्षो द्विविधः-भवमोक्षो सव्वकम्ममोक्खो य, उभयहेतोरपि आमोक्षाय परिव्रजेदिति ब्रवीमि। उपसर्गपरिज्ञायां तृतीयोद्देशकः ४-३ ॥

वुत्तं निज्जुत्तीए हेतुसरिसेहिं अहेउएहिं, हेत्वाभासैरित्यर्थः, कथमहेतवो हेतुसदृशाः ?, वक्ष्यति हि सुहेण सुहमज्झेमो० वणिजवत्, तथा च 'जहा गंडं पिलागं वा' एवं सीलक्खलिया अण्णउत्थिया तब्भावुकाश्च 'आहंसु'रिति ॥२२५॥ आहुः, के ते ?-महापुरिसाः पहाणा पुरिसा, राजानो भूत्वा वनवासं गत्वा पच्छा णिव्वाणं गताः, 'पुव्विं तत्ततवोधणा' पुव्वमित्यतीते काले

क्वचित्रेतायां द्वापरे च, तप एव धनं तपोधनं, तसं तपोधनं यैः त इमे तत्ततवोधणा, पंचाग्नितापादि लोइयाणं ते ते महापुरिसा, आस्माकं तु यदा सामन्नं प्रतिपन्नाः तदा महापुरिसा, 'भोचा सीतोदकं सिद्धा' सीतोदगं णाम अपरिणतं, तेण सोयं आयरंता ण्हाणपाणहत्थादीणि अभिक्खणं सोएंता तथाऽन्तर्जले वसंतः सिद्धिं प्राप्ताः सिद्धाः, एवं परंपरश्रुतिं श्रुत्वा अस्नानादिपरीषहजिताः 'तत्थ मंदे विसीदंति' तत्रेति तस्मिन्नस्नातकव्रते फासुगोदयपाणे वत्ति, तत्थिमे 'अभुंजिया णमी वेदेही एमाउत्ते य भुंजिया। बाहुए उदयं भोचा तहा नारायणे रिसी ॥२२५॥ आसिले देविले चेव, दीवायणमहारिसी। पारासरा दगं भोचा, बीताणि हरिताणि य ॥२२६॥' 'एते पुव्विं महापुरिसा' ॥२२७॥ प्रधानाः पुरिषाः महापुरिषाः आहिता–आख्याता, 'इह संमत'त्ति इहापि ते इसिभासितेसु पढिज्जंति, णमी ताव णमिपव्वज्जाए सेसा सव्वे अण्णे इसिभासितेसु, असिले देविले चेवत्ति बंधाणुलोमेण गतं, इतरथा हि देवल आसिल इति वक्तव्यं, एतेसिं पत्तेयबुद्धाणं वणवासे चेव वसंताणं बीयाणि हरिताणि य भुंजंताणं ज्ञानान्युत्पन्नानि, यथा भरतस्य आदंसगिहे णाणमुप्पण्णं, तं तु तस्स भावलिंगं पडिवण्णस्स खीणचउकम्मस्स गिहवासे उप्पण्णमिति, ते तु कुतित्था ण जाणंति कस्मिन् वर्त्तमानस्य ज्ञानमुत्पाद्यते कतरेण वा संघतणेण सिज्झति ?, अजानानास्तु ब्रुवते० ते नमी आद्या महर्षयः भोचा सीतोदगं सिद्धाः, भोचेति भुंजाना एव, सीतोदगं कन्दमूलाणि वा, जोइं च समारंभंता, 'जहमेतमणुस्सुतं'ति भारहपुराणादिसु एवं एताहि कुसुतीउवसग्गेहिं उवसग्गिज्जमाणे, ण केवलं सरीरा एव उवसग्गा, माणसा अपि उपसर्गा विद्यंते, यां श्रुतिं श्रुत्वा मनमा विनिपातमापद्यंते, कथं ?, उच्यते 'तत्थ मंदा विसीदंति' ॥ २२८ ॥ तस्मिन्निति कुश्रुतिउपसर्गोदये मंदा–अबुद्धयः विसीतंति–फासुएसणिज्जे छकाएसु अ परिहरितव्वेसु, दिट्ठंतो 'वाहच्छिण्णा व गद्दभा'

भारेणेत्यर्थः, खंधेन पृष्ठेन वा, एवं ते परसामयिका कर्मगुरुगा लुक्खमणुण्हमणियतं एरिसेण लूहेण अजंवेत्ता अस्नानादि ताव संजमगुणे य गुरुए अचइत्ता वोढुं त्वरितमोक्षाध्वगानां साधूनां लघुभूतानां पीढाभ्यां परिसर्प्पतीति पीढसप्पी, संभ्रमंति तस्मिन्निति संभ्रमः, जनस्यान्यस्य त्वरितमग्गिभयात् णस्सितुकामो किल पीढसप्पी दूरातोज्झितोऽपि जणं वा वच्चंतं पिट्ठतोऽणुवयति, एवं तेऽवि किल संसारभीरवो मोक्षप्रस्थिताः सीतोदगादिसंगात् संसार एव पडंति। इदानीं शाक्याः परामृश्यन्ते—इहमेगे तु मण्णंते सातं सातेण विज्जती ॥२३०॥ सायं णाम सुखं श्रोतादि तं सातं सातेणेव लभ्यते, सुखं सुखेन लभ्यत इत्यर्थः, वयं सुखेन मोक्षसुखं गच्छामः, दृष्टांतो वणिजः, तुब्भे पुण परमदुक्खितत्वात् 'जितत्थ आयरियं मग्गं' जिता नाम दुःखप्रव्रज्यां कुर्वाणा अपि न मोक्षं गच्छत, वयं सुखेनैव मोक्खसुक्खं गच्छामः इत्यतो भवंतो जिता, तेनास्मदीयार्यमार्गेण 'परमं'ति समाधित्ति मनःसमाधिः परमा, असमाधीए शारीरादिना दुःखेनेत्यर्थः। 'मा एतं अवमण्णंतो' सिलोगो ॥२२९॥ अमाणोणा प्रतिषेधे, अथ तद्बुद्धप्रणीतं सुखात्मकं मार्गमवमन्यमानाः आत्मानमात्मना वंचयंते इत्यर्थः, दूरं दूरेण सुखातो, लुंपह छिन्दध, दिट्ठंतो 'एतस्स अमोक्खाए अयहारीव जूरथ' त एवं वदंतः प्रत्यंगिरादोषमापद्यंते, कथं ?, 'इहमेगे तु मण्णंता सातं सातेण विज्जते,' इहेति इह निर्ग्रंथशासने, सातं साते न विद्यते, का भावना ?—नहि सुखं सुखेन लभ्यते, यदि चेवमेवं तेनेह राजादिनामपि सुखिनां परत्र सुखिना भाव्यं, नारकाणां तु दुःखितानां पुनर्नरकेनैव भाव्यं, तेन साया सोक्खसंगे त्ति, 'जिता नाम शिरस्तुण्डमुण्डनमपि कृत्वा सम्यग्मार्गमास्थाय मोक्षं गच्छंति, परमं च समाधि ता मोक्खसमाधि, इह वा जाऽसंगसमाधि, उक्तं हि—"नैवास्ति राजराजस्य तत्सुखं नैव देवराजस्य। यत्सुखमिहैव साधोर्लोकव्यापाररहितस्य ॥१॥" 'मा एयं अवमण्णंता' अमानोनाः

प्रतिषेधे, 'एतंति' एतं आरुहंतं मग्गं अवमण्णंता आत्मानमात्मना बहुं परिभविजह–लुंपह बहुं, को दृष्टान्तः ?, 'एयस्स अभ्भोक्खाए अयहारिव्व जूरथ' कथं ?, जेण तुब्भे वा 'पाणातिवादे वट्टंता' सिलोगो ॥२३२॥ स्यात्–कथं प्राणातिपाते वर्त्तामहे ?, येन पचनानि पाचनानि चानुज्ञातानि, उक्तंहि–पचंति दीक्षिता यत्र, पाचयंत्यथवा परैः। औद्देशिकं च भुंजंति, न स धर्म्मः सनातनः ॥१॥" मुसावादेवि असंजता संजतंति अप्पाणं भणध, अदत्तादाणे च जेसिं जीवाणं सरीराइं आहारेंति तेहिं अदत्ताइं आएह, धेनूनां वत्सवृद्ध्यै नियुंजितुं मेथुनेऽपि प्रेष्यगोपशुवर्गाणां, परिगहेऽपि धनधान्यग्रामादिपरिग्रहः, एवं कोधमाण जाव मिच्छादंसणसल्ले इति, एवं ताव शाक्याः अन्ये च तद्विधाः कुतीर्थाः, 'एवमेगे तु पासत्था' सिलोगो ॥२३३॥ एवमवधारणे 'एते' इति शाक्याः अन्ये च तद्विधाः, पार्श्वे तिष्ठन्तीति पार्श्वस्थाः, केषां ?–अहिंसादीनां गुणानां णाणादीण च सम्मदंसणस्स वा, किं ?–पण्णवेंति विसयणिग्घाते सुहेण सुहं, अथवा इमं पण्णवेंति दगसोयरियादयो, सुखलिप्सवो अजितेन्द्रिया 'इत्थीवसगता बाला जिणसासणपरम्मुहा' किं पण्णवेंति–विसयणिग्घातणे तु कज्जमाणे णत्थि अधम्मो अप्पणो परस्स वा सुखमुत्पादयतः, अप्येवं धर्मो भवति, नत्वधर्मः, को दृष्टान्तः ?, 'जधा गंडं पिलागं वा' सिलोगो ॥२३४॥ जहा कोई अप्पणो परस्स वा गंडं पिलागं णिप्पीलेत्ता पुव्वं पूयं सोणितं वा णिस्सावेतित्ति को अधम्मो ?, एवं जो कोई इत्थिशरीरे शुक्रविषयनिर्घातं कुर्यात् तत्र को दोषः स्यात् ?, 'एवं विण्णवणीत्थीसु' एवमनेन प्रकारेण विज्ञापना नाम परिभोगः, एकार्थिकानि आसेवना, दोषः तत्र कुतः स्यात् ?, किंच 'जहा मन्धातइए णाम' सिलोगो ॥२३५॥ मंधातई णाम मेसो, सो जहा उदगं अकलुसेन्तो य जण्णुएहिं णिसीदितुं गोप्पएवि जलं अणदुआलेंतोवि पियति, एवमरागो चित्तं अकलुसेन्तो जइ इत्थिं विण्णवेति को तत्थ दोसो ?, उक्तं च–"प्राप्तानामु-

पभोगः शब्दस्पर्शरूपरसगन्धानाम्" किंच 'जहा विहंगमा पिंगा' सिलोगो ॥२३६॥ विहायसा गच्छंतीति विहंगमा, पिंगा पक्खिणी, आगासेण चरंती, उदगे अनिलीयमाना अविक्खोभयंती तं जलं चंचूए पिवति एवं विण्णवणित्थीसु, एवमरज्जमाणो यदि संप्राप्तान् भोगान् भुंजीत अत्र को दोषः?, उत्तरदाणं–णणु तेसिं आसेवणा चेव संगकरणं, मेधुणभावं आसेवामित्ति, 'जह णाम मंडलग्गेण सीसं छेत्तूण कस्सई पुरिसो। अच्छेज्ज पराहुत्तो किं णाम तत्तो ण घेप्पेज्ज? ॥ १ ॥ अथवा विसगंडूसं कोई घेत्तूण णाम उण्हिक्को। अण्णेण अदीसंतो किं नाम ततो णवि मरेज्जा?॥२॥ जह वावि सिरिघरातो कोई रयणाणि णाम घेत्तूणं। अच्छेज्ज पराहुत्तो किं णाम ततो ण घेप्पेज्ज? ॥३॥''एवं तु समणा एगे' सिलोगो ॥२३७॥ एवमनेन प्रकारेण, तु विसेसणे, नासदीया, परे, एकेत्ति परेपामपि न सर्वे, एके, मिथ्यादृष्टयः अनार्या मिच्छादिट्ठीअणारिया, अथवा मिथ्यादृष्टित्वेऽपि कर्मभिरनार्याः, अज्झोववण्णा कामेहिं, दुविहेहिवि कामेहिं, दिट्ठंतो 'पूअणा इव तण्णए' पूयणा णाम उरणीया, तस्या अतीव तण्णगे छावके स्नेहः, ततो जिज्ञासुभिः कतरस्यां २ जातौ प्रियतराणि स्तन्यकानि?, सर्वजनानां छावकानि अनुदके कूपे प्रक्षिप्तानि, ताश्च सर्वाः पशुजातयः कूपतटे स्थित्वा सच्छावकानां शब्दं श्रुत्वा रंभायमाणास्तिष्ठंति, नात्मानं कूपे मुंचति, तत्रैकया पूतनया आत्मा मुक्तः, त एवं पूतना इव तरुणे(णणए)मुच्छिता गिद्धा कामेसु 'अणागतमपासंता' सिलोगो ॥२३८॥ अनागतकाले किंपाकफलाहारवत् विपयदोपानपश्यन्तः 'पच्चुप्पण्णविसयगवेसणा' णाणाविहेहिं उवाएहिं विसयसुहं उप्पायंता 'ते पच्छा अणुसोयंति' ते इति अण्णउत्थिया परलोकं प्राप्ता अनुशोचंते देवदुर्गतौ यत्र वाऽन्यत्रोपपद्यंते, दृष्टान्तः 'खीणे आउंमि जोव्वणे' यथातिक्रान्तवयसः क्षीर्णेंद्रियशरीरबुद्धिबलपराक्रमाः नानाविधैः क्रीडाविशेषैः तरुणान्, वयमप्येवं क्रीडितवन्तः, तीव्रमनुशोचयन्ति,

